श्रीः

# प्र स्ता व ना

भो ! भो ! विमर्शधनिनः तत्त्वजिज्ञासवश्च ये ।
मद्भावं प्राप्नुवन्त्येव यदि सद्भावमाश्रिताः ॥ १ ॥

कालसङ्कर्षिणी कालीत्यन्वर्था साम्बिका ततः ।
आद्यन्तबिन्द्वोस्तद्रूपं चतुर्थेऽपि च वर्णितम् ॥ २ ॥

दृष्टान्तादिभिरापन्नव्यग्रभावापनुत्तये ।
यज्ञस्वरूपं दिङ्मात्रमत्र बिन्दौ त्रयोदशे ॥ ३ ॥

(वर्णितमिति पूर्वेणान्वयः)

तत्त्वार्थबोधनं त्वत्र प्रतिज्ञातं फलात्मना ।
[1]स्याल्लोकवदितीवात्र लौकिकं चापि दर्शितम् ॥ ४ ॥

दृष्टान्तस्तु प्रसिद्धार्थात्तत्सत्यासत्यता पुनः ।
तत्तत्प्रकरणाद् ज्ञेया नात्र तत्तद्विचारणा ॥ ५ ॥

प्रसिद्धार्थोदाहरणम्—

[2]श्रुतावुद्यन्तमित्यादिविशेषणनिरूपणम् ।
[3]तत्क्रियाहीनभानोस्तु लौकिकेन तु वर्त्मना ॥ ६ ॥

तत्त्वार्थकथने तावन्नेदृग्दोषाय कल्पते ।
[4]यद्यदुद्देशनिर्दिष्टं तस्य तत्रैव मानता ॥ ७ ॥

---

(१) **स्याल्लोकवत्**—भोक्त्रापत्त्यधिकरणोक्तमिदं वाक्यम् । अस्य तात्पर्यं तावदेतत्सूत्रोत्तरसूत्रे (तदनन्यत्वमारम्भणशब्दादिभ्यः ब्र. सू २-१-१४)—इतिसूत्र-भाष्यान्ते द्रष्टव्यम् ।

(२) **श्रुतौ**—"उद्यन्तमस्तंयन्तमादित्यम्"—इत्यादिश्रुतावित्यर्थः ।

(३) **तत्क्रियाहीनभानोः**—अत्र श्रुतौ तावद्यदुक्ता उद्यन्तमित्यादिना उद्गमनादिक्रियाः—तादृशक्रियाहीनभानोरिति भावः । एतेन न सर्वथा क्रियाशून्यो भानुरिति मन्तव्यः—तस्य स्वाकर्षकं प्रद्युम्नं परितः भ्रमणदर्शनात् ।

(४) **यद्यदुद्देशनिर्दिष्टम्**—"यद्यदुद्देशेन प्रवृत्तं तत्तदंश एव प्रमाणम्" इति न्यायात् तत्तत्रैवेति भावः ।

तस्माद्दृष्टान्तवस्तूनि मिलोद्देशोपदेशनः ।
अप्राकरणिकत्वेन बाधकानि भवन्ति न ॥ ८ ॥

यज्ञे रहस्यास्तित्वं पुनः स्मार्यते चादरात्---

[1]सहयज्ञा इति स्मृत्या यज्ञा दृष्टफलाः पुरा ।
द्रौपदीजननाद्येषु कथाभागेषु विश्रुताः ॥ ९ ॥
पुरा महर्षिविज्ञानमद्भुतं प्रतिभासते ।
वसिष्ठस्य प्रतिस्पर्धी [2]विहव्यं क्रतुमाहरत् ॥ १० ॥
विश्वामित्रर्षिपुत्रेण सुश्रुतेनोपपादिते ।
सोमपानविधौ [3]भेदो वैदिकेऽप्यस्ति दृश्यताम् ॥ ११ ॥
प्रत्यक्षफलदा द्रव्ययज्ञाश्चेत्सर्वपूजिताः ।
नोचेदविधिनैवेते कृता इत्येव तर्किताः ॥ १२ ॥
कर्तुं वाप्यथवाऽकर्तुमन्यथाकर्तुमेव वा ।
रहस्यज्ञः समर्थस्स्यात् नान्योऽमन्त्रार्थतत्त्ववित् ॥ १३ ॥
नाक्षेपो भविता तादृङ्मन्त्रतत्त्वार्थवेदिना ।
कृते कर्मणि कस्यापि परिपूर्णफलप्रदे ॥ १४ ॥

---

(१) **सहयज्ञा इति**---"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥" (भ-गी-३-१०) इति स्मृत्येति भावः ।

(२) **विहव्यम्**---"विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेतां स एतज्जमदग्निर्विहव्यमपश्यत्" (तै-सं-का-३-१-८) इति श्रुत्या निरूपितः ।

(३) **भेदः**---"गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते । एते सोमास्समाख्याताः वेदोक्तैर्नामभिश्शुभैः ॥ (अयं २४ सोमनामाख्यानश्लोकेषु तृतीयः । तत्र) अतोऽन्यतमं सोममुपयुयुक्षुः सर्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु अंशुमन्तमादाय **अध्वरकल्पेनाहृतमभिषुतमभिहुतं च** अन्तरागारे कृतमङ्गलस्वस्तिवाचनः सोमकन्दं [illegible]सूच्या विदार्य पयो गृह्णीयात्सौवर्णे पात्रेऽञ्जलिमात्रम् । ततस्सकृदेवाभिषुणीत [illegible] । तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरं [illegible]रुपास्यमानो विहरेत (गद्य-५) । "रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः । आसीत तिष्ठेत्कामेच्छ न कथंचन संविशेत् ॥ (सु-चि-२९ अ. ६) == (स्वभावव्याधिप्रतिषेधनीयम् )

[illegible]कृदिशा दृश्यमानभेद इति भावः ।
[illegible]

कुतो न यज्ञाः फलदाः पुरेवाद्येति संशये ।
पापाधिकत्वात्कालस्येत्यूचुः केचिदिहोत्तरम् ॥ १५ ॥
यद्येवमशुभं वा स्याद्यज्ञानर्थस्य नो तथा ।
तद्यज्ञरूपं न ज्ञातमित्यूहोऽद्यतनैरिति ॥ १६ ॥

उक्तस्योदाहरणम्—

अध्वर्युप्राणविच्छेदः[1] न्विति श्रूयतेऽध्वरे ।
पवमानघटे छिन्ने न तथाऽद्येक्ष्यते क्वचित् ॥ १७ ॥
तद्धेतुर्विद्युदादीनामभावस्तर्क्यतेऽत्रै[3] तु ।
[4]बिन्दौ त्रयोदशे त्वीदृग्ग्रहस्यास्तित्वसूचना ॥१८॥ (कृतेति शेषः)

अवशिष्टबिन्द्वंशास्सूच्यन्ते—

द्व्यादिबिन्दुगतास्त्वंशास्सूच्यन्ते नाममात्रतः ।
विद्वत्कार्यविमर्शेषु द्वाराणीमे भवन्त्विति ॥ १९ ॥
ऋतुकर्ता रवीन्द्वोः कः ? भूमिर्भ्रमति वा न वा ? ।
वातादिदोषाः किं रूपाः ? किं तत्त्वं गगनस्य तु ? ॥ २० ॥
कः पूर्णपदतत्त्वार्थः ? निन्द्यं यत्किञ्चिदस्ति वा ? ।
विवाहफलितं किं स्यात् ? के वा गीताभिसन्धयः ? ॥ २१ ॥
दक्षिणानियतिः कस्मात् ? कृष्णो जारोऽथवा न वा ? ।
कालिदासजनिस्थानं किं ? का वास्यायायुषो मितिः ? ॥ २२ ॥
एवं विमर्शिता बिन्दुष्वंशास्तत्त्वार्थसिद्धये ।
सुधियामिःमेवालं विमर्शघनिनां भवेत् ॥ २३ ॥

(१) अन्विति—"छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणोऽनुविच्छिद्येत" (तै. सं. का. ३-२-१) इति श्रुतौ अनुविच्छिद्येतेति श्रूयत इति यत् तदित्यर्थः ।

(२) विद्युदादीनाम्—"चत्वारि वा अपां रूपाणि-मेघो-विद्युत्-स्तनयित्नु-र्वृष्टिः । तान्येवावरुन्धे (अरुणम्-अनु-२४) इति श्रुत्याऽत्रत्य वसतीवरेषु प्राणहानिकराणां विद्युदावेशादीनां तर्किनास्तित्ववतामित्यर्थः ।

(३) अत्र—पवमानघट इत्यर्थः ।

(४) बिन्दौ—वेदगुप्तार्थदीपिकाख्यबिन्दौ ।

जीवस्य तत्त्वाधिगमोपायो निरूप्यते—

शिलाकणोपसंसृष्टे तण्डुले तण्डुलेच्छया ।
तत्पृथक्करणे तावदुञ्छत्येव शिलाकणान् ॥ २४ ॥
तथा चिज्जडसंसृष्टे चित्कामी जडहानये ।
तद्रूपामम्बिकामेव प्रत्यग्दृष्ट्या तु साधयेत् ॥ २५ ॥

अथाम्बिकास्वरूपसाधने निरूप्येते—

अम्बिकापदनिरुक्तितो जग-
द्रूपिणीति सगुणा तदाम्बिका ।
निर्गुणा च कलिताऽजसत्तया
सैव चेत्थमिति वक्तुमक्षमा ॥ २६ ॥

ब्रह्मवत्करणशून्यकार्य-
वत्यम्बिका च जगतो जनन्यतः ।
चित्कलेति कथितेन्दुतोलिता
चिज्जडप्रकृतिभिन्नलक्षणा ॥ २७ ॥

ईदृशीमपि वशं नयेदलं
भक्तिरेव बहुसत्त्वशालिनी ।
नान्यथा गतिरतोऽस्ति [1]यौगिके
सेव्यतामुपनयेत्तयाम्बिकाम् ॥ २८ ॥

अत्रास्मदागमनकृत्यप्रतिष्ठा निरूप्यते—

अम्ब ! त्वदीयकरधारितलालिताङ्ग-
स्त्वच्चुम्बनेक्षणपदैर्बहु हासितस्सन् ।
पश्यन् मुखं तव पयो विधिपीतशेषं
पास्यन् पदानि कतिचित्कलये भवानि ॥ २०. ॥

—ग्रन्थकर्ता

---

(१) श्रीकृष्णोदितसाङ्ख्ययोगमार्गयोरन्यतरयोगमार्ग इत्यर्थः ।

श्रीः

# विषयसूचिका

(१) कल्याणानन्दनाथीयम् — कल्याणानन्दनाथाख्यदीक्षानामशालिना 'साङ्ख्याचार्य. दैवज्ञसार्वभौम' इत्याद्यन्वर्थबिरुदाङ्कित–राज्ञो–अन्ववायोद्भवनृसिंह-महाविनिर्मिता कृतमित्यर्थः ।

बिन्दुः

८ निन्दापवादः ८८-९०

किञ्चिदपि वस्तु वेदो न निन्दति, उत स्तौति च नृशरीरं–पशुदिव्यभावयोः परामर्शः–तयोः फले द्वैताद्वैतसिद्धिरूपे–अत्र पान्थयोरुदाहरणं–अद्वैतदर्शिनः प्रत्यवाय इति पूर्वपक्षः–तत्कर्मकाण्डविषय इति, ज्ञानकाण्डे तावत् तदेव चित्तशुद्धिद्वारा मोक्षहेतुकमिति सिद्धान्तः–तस्माद्यत्किञ्चिदपि न निन्द्यादिति निगमनम् ।

९ वैवाहिकांशविमर्शः ९१-१०२

साापिण्ड्यस्य साप्तपौरुषत्वनिरूपणं गणितदिशा–अत्रत्यसप्तत्वस्योपपत्तिः, ततो गोत्रस्वरूपनिरूपणं–सप्तमे पदे पुनरावृत्तिदर्शनात्तावता विरमणं–अतोऽस्य (सप्तभक्तलब्धस्य) मण्डलसम्बन्धित्वं–पित्रपेक्षया पुत्रस्य दशांशत्वं कूटस्थे त्रिपूर्णत्वं च–उक्तार्थोपबृंहकबिन्दुस्वरूपविमर्शः – बिन्दोः कलाप्रतीकत्रिज्याऽभावान्निष्कलत्वं तथा ब्रह्मणश्च–प्रथमा जडसृष्टिः–तदनुपदमेव दीर्घवृत्तीयगणितोपपत्तिसाध्या - जीवसृष्टिश्च–दीर्घवृत्तस्वरूपं–अर्धनारीश्वरस्वरूपनिरूपणं–निर्गुणब्रह्मप्रतीक - बिन्दोरेव मायाप्रतीकत्रिज्यारूपरेखोत्पत्तिः–मायास्वरूपवर्णनं- ब्रह्माभिन्नजीवैरेषा (माया) अनुभूयते च निर्गुणसुषुप्तेर्जाग्रदवस्थापत्तिरिव – त्रिज्यायाः श्रीदेवीत्वं, षड्ज्यायास्तु ह्रीदेवीत्वं च–बिन्दुप्रतीकब्रह्मणः पूर्णत्वात्कुतः पार्श्वलाभ इति पूर्वपक्षः – अणुत्वदर्शकश्रुत्येति सिद्धान्तः – दीर्घषड्ज्ययोः (दीर्घवृत्तीयलघ्वक्षबृहदक्षयोः) अन्तरमेव जीवप्रकृतिसूचकत्वनिरूपणं–जगद्गतिस्सर्वापि दीर्घवृत्तीया–अत्राणुगर्भस्थितनैजे

(१) तैजसाग्नेयपरामाणुः—electron.

बिन्दुः

सङ्ख्यायाः ब्रह्मप्रतीकपूर्णादेवोत्पत्तिलयौ—एतद्दृष्टान्तदर्शनेन ब्रह्मतत्त्वावबोधः--वर्गीयसंक्षिप्तश्लोकाः -- सङ्ख्यादृष्टान्तोपलब्ध-ब्रह्मावबोधे व्यासादीनामिव शाब्दश्रमाभावः, तस्मादस्खालित्यं च — दिग्देशकालात्मकत्रिप्रश्ननिरूपणं — पात्रस्वरूपं -- एतेषां पित्रादित्रयसम्बन्धः — दिग्भेदात्फलभेदोदाहरणं — कालभेदात्फलभेदोदाहरणं -- ब्रह्मविद्यास्वरूपिण्याः श्रीदेव्याः पूजने आद्यन्तयोः कालपूजनोपपत्तिः — श्रीदेवीभावना-विशेषः—उपासनस्य सन्ध्यावश्यकता—पाठकाशीर्वादः, तत्स-मन्वयश्च—एवमेव सर्वे विषया विमर्शनीया इति निगमनम् ॥



**प्रथमं शुद्धपत्रेण शोधनं पठनं ततः ।**
**सुधिया कार्यमत्रेति विदांकुर्वन्तु पण्डिताः ॥**



॥ श्रीः ॥

# विमर्शामृते

## ॥ तिथितत्त्वविमर्शो नाम प्रथमबिन्दुः ॥

### ॥ मङ्गलाचरणम् ॥

स्मरामः स्मरजिच्चेतोहारिणीं लोकतारिणीम् ।
यत्कटाक्षं विना मोक्षो न तां शृङ्गारनायिकाम् ॥ १ ॥

### ॥ विमर्शनावश्यकत्वम् ॥

ब्रह्मानन्दप्रतीकं किं कुत्रास्तीति गवेषणा ।
नरेष्वेवास्ति नान्यत्र पशुबुद्धिगवादिषु ॥ २ ॥
अतस्तदिन्द्रियं छन्नं नृष्वेव न पशुष्विति ।
विमर्शनधनैरेवाऽऽक्रीतस्तद्ब्रह्मसंपदा ॥ ३ ॥
प्रकाशः (ज्ञानम्) तत्सहायस्तद्द्वितयं गुरुपद्युगम् ।
ब्रह्मरन्ध्रेत्यादिसिद्धं सार्वभौमपदास्थितम् ॥ ४ ॥

---

(१) ब्रह्मसंपदा—वेदविज्ञानसंपदा । अत्र वेदविज्ञानं नाम "प्रजातिरमृतमानन्द इत्युपस्थे" (तै-उ-भृ-व) इति श्रुतिलक्षितविज्ञानम् ।

(२) ब्रह्मरन्ध्रेत्यादि—

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीकनककाण्डमण्डितं द्वादशान्तसरसीरुहं भजे ॥
तत्र कन्दलितकर्णिकापुटे क्लृप्तवर्णमकथादिरेखया ।
कोणलक्षितहलक्षमण्डलं भावलक्ष्यमनलालयं भजे ॥
तत्पुटे पटुतटित्कडारिमस्पर्धमानपरिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं सदा बिन्दुनादमणिपीठमण्डलम् ॥
ऊर्ध्वमूलहुतभुक्शिखारुणं चिद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहच्छटाकुलं भावयामि युगमादिहंसयोः ॥
तत्र नाथचरणारविन्दयोः संविदामृतझरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरतु मङ्गलास्पदम् ॥

(पादुकापञ्चरस्तोत्रम्—वामकेश्वरतन्त्रम्)

इति श्लोकपञ्चकेन सिद्धं गुरुपद्युगं प्रकाशविमर्शात्मकं सार्वभौमपदास्थितं भूयादित्यन्वयः ।

॥ अथ ग्रन्थस्वरूपम् इष्टदेवताप्रीतिं च निरूपयति ॥

छन्दोभिश्छादितं वेदरहस्यं छान्दसं हि तत् ।
तदन्तर्गतये साङ्ख्यम् ज्योतिषञ्च पदद्वयम् ॥ ५ ॥
तिथ्यृतुप्रमुखाः कालाः पितृरूपास्तदुद्भवाः ।
पितृप्रीतिकरी तावत्तिथिरादौ विमर्शिता ॥ ६ ॥
मध्ये साङ्ख्यम् माकरन्दबिन्दुस्पर्ध्यन्तिमे मधु ।
यतिना सूक्ष्ममतिना श्रीमातुः प्रीतयेऽप्यलम् ॥ ७ ॥
विचिकित्सा तृडार्तानां विमर्शामृतबिन्दवः ।
तर्पकास्तर्पितास्तैस्स्याद्बिन्दुतर्पणलालसा ॥ ८ ॥

॥ अथ अनुबन्धचतुष्टयम् ॥

तत्त्वार्थबोधने सङ्ख्या विचिकित्साम्बुशोषिणी ।
तेन तच्छोषणं त्वत्र सङ्ख्ययैव प्रधानतः ॥ ९ ॥
विज्ञानपूर्वकज्ञानं फलमत्रेति चिन्तितम् ।
तदाशास्ताऽधिकारी स्यात्तच्छिष्टं स्पष्टमेव हि ॥ १० ॥

**अथ ग्रन्थारम्भः**

ज्योतिश्शास्त्रादिमस्कन्धे वेदाङ्गे कालसाधने ।
निरूप्यते तिथेस्तत्त्वं सह तत्परिभाषया ॥ १ ॥
कालो द्विधाऽदृष्टदृष्टफलकत्वेन कीर्तितः ।

---

(१) **पितृरूपाः**—पितृदेवतास्वरूपाः। तथा च श्रुतिः "षण्मार्जालीये षड्वा ऋतवः। ऋतवः खलु वै देवाः पितरः . ऋतूनेव देवान् पितॄन् प्रीणाति" इति ।

(२) **पितृप्रीतिकरी**—नान्दीमुखपितॄणां प्रीतिकरी ।

(३) **मधुः**—"मधु वाता ऋतायते....माध्वीर्गावो भवन्तु नः" इति श्रुत्युक्तमध्वित्यर्थः। अत्र गाव इति पदमस्मद्वाचः परामृशति ।

(४) **अदृष्ट**—अत्र गणितागततिथिरूपेण दृष्टत्वाभाव इत्यर्थः ।

**यथाः**—औदयिकीतिथिर्यदि पञ्चघटिकात्मिका तद्दिवसीयसायङ्काले तदभावेऽपि तन्नित्यकृत्यकर्तव्यतोपदेशात् तादृशकालस्य अदृष्टत्वोपपत्तेरदृष्टत्वम्—

**उदाहरणम्**—51, 52, 53 श्लोकाः दृश्यन्ताम् ।

केवलग्रहगत्याऽऽद्यः साध्योऽन्यस्तु परैरपि ॥ २ ॥

परीक्षकाणां दृश्यन्ते गगने गगनेचराः ।
कर्षकाकृष्यभेदेन द्विधा ते कर्मधर्मतः ॥ ३ ॥

कर्षणक्रियया त्वाद्यः कृष्यमाणत्वतः परः ।
कर्षकं परितः कृष्यो यन्मार्गे गतिमानभूत् ॥ ४ ॥

स कक्षासंज्ञितो मार्गस्तद्रूपं दीर्घवृत्तवत् ।
त्रिनाभिचक्रसंज्ञा तु दीर्घवृत्तस्य दृश्यते ॥ ५ ॥

समवृत्तं त्वेकनाभिचक्रं तत्समत्रिज्यकम् ।
त्रिनाभिचक्रगास्त्रिज्या विषमा वृत्तदैर्घ्यतः ॥ ६ ॥

भचक्रं सर्वकक्षाणां दूरगं चोपरिस्थितम् ।
तदारम्भोऽश्विनी तस्मात्कलापो गणितस्य तु ॥ ७ ॥

त्रिकेन्द्रस्पृष्टषड्ज्याया अग्रे नीचोच्चसंज्ञिते ।
दीर्घवृत्ते कर्षकस्याऽऽराद्दूरे क्रमतःस्थिते ॥ ८ ॥

आत्मप्रदक्षिणं सर्वकक्षाणामस्ति तद्गतिः ।
मीयते तुच्चभगणैस्तत उच्चश्च न स्थिरम् ॥ ९ ॥

कक्षाणामपि चान्योन्यप्रवेशाच्छेदबिन्दवः ।
पातसंज्ञास्तथा तेषां वामतो गतिरस्ति हि ॥ १० ॥

खमध्यान्नमनं तावद्ग्रहस्य नतिरुच्यते ।
तयोनिता नवत्यंशा उन्नतांशा इति स्मृताः ॥ ११ ॥

---

(१) **केवलग्रहगत्या**—ग्रहगतिमात्रेण ।

(२) **परैरपि**—क्रान्ति, नति, लम्बनादिदेशभेदोत्थैरपीति भावः ।

(३) **दृश्यते**—वेदे दृश्यत इत्यर्थः । यथा "त्रिनाभिचक्रमजरमनर्वं येनेमा विश्वा भुवनानि तस्थुः" (चित्ती) इति ।

(४) **अश्विनी**—अश्विनीनक्षत्रम् । एतन्निरूपणार्थं "सप्तद्भभचित्राप्रारम्भस्थानमित्यभिधीयते" इत्येष पक्षो ग्राह्यः न पुना रैवतः तस्याद्यबिन्दुलान्यूनत्वादिति भावः ।

भूतिर्यग्भावतो भानुर्भाति यानीव दक्षिणम् ।
नाडीमण्डलतस्तद्वदुत्तरेणापि तद्गतिः ॥ १२ ॥
भवेद्(१)यनयोर्हेतुरर्कक्रान्तिस्तथैव सः(२) ।
क्रान्तिवृत्ते तु खेटस्य गमनं भोग उच्यते ॥ १३ ॥
अन्तरं तद्ग्रह(३)क्रान्तिवृत्तयोश्शरसंज्ञितम् ।
ग्रहावस्थितिविज्ञानहेतवस्सन्ति ते त्रयः ॥ १४ ॥
त्वाद्यो ग्रहगतिः, कक्षागतिरन्यो,ऽथ देशजः ।
स्वकक्षायां गतिः खेटगतिः खेटस्य तूदिता ॥ १५ ॥
कक्षागतिस्तथैवान्या कक्षाणां परिवर्तनम् ।
क्रान्ति,लम्बन,नत्यादिर्देशजोऽयं तु केवलम् ॥ १६ ॥
भूतिर्यक्त्वादिसञ्जातो योज्यो दृक्कर्ममात्रके ।
संपातो विषुवत्क्रान्तिवृत्तयोश्छेदजः स्मृतः ॥ १७ ॥
तस्मिन् रविर्यदायाति तदा विषुववासरः ।
तदादिभूमितिर्यक्त्वात् पार्श्वयोः क्रान्तिसम्भवः(४) ॥ १८ ॥
तद्वत्संपातबिन्दोस्तु प्राक्पश्चिमगती स्फुटे ।
त्रिंशत्कृत्यो युगे भानामित्यादिरविभाषिते(५) ॥ १९ ॥

---

(१) **भवेत्**—पूर्वश्लोकोक्तगतिर्भवेदित्यन्वयः ।

(२) **सः**—हेतुः ।

(३) **तद्ग्रहः**—क्रान्तिवृत्तीयभोगविशिष्टग्रह इत्यर्थः ।

(४) **क्रान्तिसम्भवः**—दक्षिणोत्तरक्रान्ती उत्पद्येते भानोरिति भावः ।

(५) **त्रिंशत्कृत्योयुगे भानाम्**—एकस्मित् महायुगे षट्शतवाराणि भानाम् 'चक्रं प्राक्परिलम्बते' इति सौरोक्तोत्तरपादेनान्वयः । अत्र परिलम्बनं नाम 'होरायन्त्रीय लम्बक (Pendulem) वत् पश्चाद्गत्वा प्रागागमनम् । तथा चोक्तम्—"प्राक् चक्रं चलितं हीने छायार्कात् करणागते । अन्तरांशैरथावृत्तपश्चात् शेषैस्तथाधिके ।" ( सू-सि-३ अ. ११ श्लो ) इति । एतेनैकस्सम्पद्यतेऽपूरणभगणः । तादृशापूरणभगणा महायुगे षट्शतसङ्ख्याका भवन्तीति भावः । उक्तं च सौरे—

यदद्य तावत्तद्भ्रामगतिजा अयनांशकाः ।
न खेटगतिसंस्कार्या अदृष्टतिथिसाधने ॥ २० ॥
मान्दं कर्मैकमित्यादि खेटमात्रगतिस्मृतेः ।
राहुस्तु क्रान्तिविक्षेपवलयच्छेदसम्भवः ॥ २१ ॥
स चन्द्रपातसंज्ञोऽसौ भूमिपाताभिधोचितः ।
विषुवाख्यन्तु खे, नाडीमण्डलोर्ध्वं समान्तरे ॥ २२ ॥
शशिकक्षा तु विक्षेपसंज्ञिता भूसमन्ततः ।
दक्षिणोत्तरयोर्मध्ये स्थित्वा भूमिं समं द्विधा ॥ २३ ॥
कुर्वन् प्राक्पश्चिमं वृत्तं नाडीमण्डलसंज्ञितम् ।
क्रान्तिवृत्ताभिधं यत्तद्भूकक्षैव हि वास्तवी ॥ २४ ॥
ततस्सम्पातराह्वोस्तु दृक्फलासौ तु तुल्यता ।

यथा :—

चन्द्रराह्वन्तरं दृश्यग्रहणादौ यथोपकृत् ॥ २५ ॥

---

" त्रिंशत्कृत्यो युगे भानां चक्रं प्राक् परिलम्बते ।
तद्गुणाद्भूदिनैर्भक्तात् द्युगणात् यदवाप्यते ॥
तद्दोस्त्रिघ्नदशाऽऽप्तांशाः विज्ञेया अयनाभिधाः ।
तत्संस्कृताद्ग्रहात् क्रान्तिच्छाया चरदलादिकम् ॥
स्फुटं दृक्तुल्यतां गच्छेत् अयने विषुवद्द्वये । " इति ।

(१) **यत्**—यस्मात् कारणात् इमे अयनांशाः विषुवचक्रचलनसम्भवाः 'तत्संस्कृताद्ग्रहात् क्रान्तिच्छायाचरदलादिकम्' इति सौरोक्तिश्च तस्मात् न तिथ्युपयुक्तखेटगतिसंस्कार्या इत्यन्वयः ।

(२) **तद्भ्रामगतिजाः**—तत्सम्पातस्य पश्चाद्गमनजाता इत्यर्थः ।

(३) **मान्दं कर्मैकमित्यादि**—'मान्दं कर्मैकमर्केन्द्वोः' (सू-सि-१ अ ४३ श्लो) इत्यादि सौरमते केवल खेटगतिमात्रस्मरणादिति भावः । अत्र यद्यपि मान्दस्य समदीर्घवृत्तभेदजन्यत्वेऽपि खेटगतिशोधकत्वात् तिथ्यादौ ग्राह्यत्वम् नैवमयनांशानाम् तेषां भचक्र परिलम्बनरूपत्वादिति वेदितव्यम् ।

(४) **असौ**—संपातः ।

सोऽयनार्कार्कभेदस्तु दृश्याद्दर्मानसाधने ।
(तथोपकृत) इत्यन्वयः ।
तस्माददृश्यदैनादिप्रीनिकृतिथिसाधने ॥ २६ ॥
सायनांशाः प्रयोक्तव्या इति शास्त्रस्य डिण्डिमः ।
त्रैराशिकात्सखेटस्तु दिनगत्या स्फुटस्समे ॥ २७ ॥
वृत्ते ; स दीर्घे स्वीये तु मध्योऽतो मान्दसंस्कृतिः ।
यद्दीर्घसमयोर्भेदजातं मान्दं तु वृत्तयोः ॥ २८ ॥
केन्द्रच्युत्यपराख्योऽयं भेदो मान्दस्य कारणम् ।
त्रिनाभिचक्रे तन्मध्य पार्श्वकेन्द्रान्तरं भवेत् ॥ २९ ॥
ग्रहस्यावस्थितिर्द्वेधाऽसद्रूपा चाथ वास्तवी ।
आद्या नत्यादिदृक्साध्या त्वितरा खेटचारतः ॥ ३० ॥

यथा :—

द्रष्टा भूपृष्ठगश्चन्द्रमश्विन्यां यदि पश्यति ।
भूगर्भगस्तमेवोर्ध्वं रेवतीदिशि पश्यति ॥ ३१ ॥
(प्राच्यामिति शेषः)
अत्र भूमेर्गर्भगस्य दृष्टिरेव तु वास्तवी ।
सा चन्द्रगतिसिद्धाऽन्या द्रष्टुस्स्थानविपर्ययात् ॥ ३२ ॥

---

(१) सायनार्कार्कभेदः—अयनांशाः ।

(२) शास्त्रस्य डिण्डिमः—तिथिसाधने ।
"तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात् ॥"
(सू-सि २ अ-१४ श्लो)
"मान्दं कर्मैकमर्केन्द्वोः भौमादीनामथोच्यते"
(सू-सि-२अ-श्लो ४३) इति ।
अपि च ६१ टिप्पणं दृश्यताम् ।

(३) तत्—तत्केन्द्रच्युतिरित्यर्थः ।

एतद्भेदोऽत्र कथितः शास्त्रे लम्बनसंज्ञया ।
एष लम्बनसंस्कारः दृक्फले ग्रहणादिके ॥ ३३ ॥
कार्योऽन्यत्र न तिथ्यादौ तत्र दृक्फलता न हि ।
एवमेवायनांशाद्यैः खेटगत्यपरोस्थितैः ॥ ३४ ॥
जातं यद्दृक्फलं तत्तु तिथ्यादौ न हि संस्क्रियात् ।
पितृदेवादिसन्तोषपरोक्षफलदा तिथिः ॥ ३५ ॥
अतस्तत्साधने योज्या गतिः खेटस्य केवला ।
तस्मादित्युदितं सौरे मान्देनैकेन कर्मणा ॥ ३६ ॥
तिथिस्साध्येति—तद्भिन्नग्रहणादिषु दृक्स्मृतम् ।
समवृत्तागतःखेटः तस्य तत्रानवस्थितेः ॥ ३७ ॥
मान्देन दीर्घवृत्तेऽस्यै स्थितिस्सम्यङ्निरूपिता ।
मध्यग्रहोच्चान्तरं तत्फलकेन्द्रं तदाहृतम् ॥ ३८ ॥
मान्दम्; तत्संस्कृतः खेटः स्वकक्षासंस्थितः स्फुटः ।
देशान्तराख्यसंस्कारः क्रियते तिथिसाधने ॥ ३९ ॥
देशजोऽपीति चेन्नायं दोषस्तावच्छृणूच्यते ।
स्वैस्वाहर्गतिना साध्यास्सर्वखेटाश्च; सा गतिः ॥ ४० ॥

---

(१) **लम्बनसंज्ञया**—लम्बनमिति । तथा चोक्तम्—
"दृक्सूत्राल्लम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम् ।
दृग्गर्भसूत्रयोरैक्यात्खमध्ये नास्ति लम्बनम् ॥" इति ।

(२) **अस्य**—खेटस्येत्यर्थः ।

(३) **स्वस्वाहर्गतिना**—अत्राहर्नाम "उदयादुदयं भानोर्भूमिसावनवासरः" इत्युक्तः भूदिनमेव न तु ग्रहदिनम् । तादृशदिने तत्तद्ग्रहस्य या स्वस्वगतिः तयेत्यर्थः । अत्र 'उदयादुदयं भानोः' इति भानूदयो यदुक्तः तादृशोदयार्हभूपृष्ठभागेषु यस्मात्कस्माच्चिदारभ्य तदवधिकमेव भवति भूदिनमानम् । तथा सति सौरे ग्रहगतयः लङ्कार्धरात्रकालीनाः प्रतिपादिताः । अत एतदुत्तरश्लोके स विषयःस्मारितः । एवं भूपृष्ठेऽर्कपरिवर्तनोचितकालभागो मानखण्डो भवति मानदण्डवत्; सर्वग्रहसाधने । न ह्येतावता साधितग्रहो भूपृष्ठसमागत इति मन्तव्यः–देशान्तरसंस्कारस्य पुरोक्तमानखण्डमात्रसंस्कार-

लङ्कार्धरात्रकालीना तदन्यत्र तु तां नयेत् ।
अतो देशान्तराख्योऽयं ग्रहावस्थितिशोधनः ॥ ४१ ॥
तच्छुद्धगतिसंसिद्धा ग्रहाः स्युस्स्वस्वदेशजाः ।
भुजान्तराख्यसंस्कारश्चन्द्रेऽन्योपि प्रकीर्तितः ॥ ४२ ॥
स तु भानोर्बृहत्त्वेन तदाकर्षणसम्भवः ।
सोऽयमिन्दुगतेश्शुद्धिकरोऽतः कथितोऽत्र हि ॥ ४३ ॥
एवं संस्कृतभान्विन्दुसाध्या सौरमते तिथिः ।
अलमेतावता भानुचन्द्रयोस्संस्कृतिस्तिथौ ॥ ४४ ॥
ग्रहणादिवदेवेयं दृक्सिद्धाहर्मितिस्ततः ।
तत्साधनं चरन्तावत्सायनार्केण साधितम् ॥ ४५ ॥
ग्रहस्य गमनायातस्थित्या संसाधयेत्तिथिम् ।
न तिर्यक्त्वादिदेशोत्थैः ते तु दृक्फलहेतवः ॥ ४६ ॥
अदृष्टेति न वक्तव्या दृष्टा स्याद्राहुवत्तिथिः ।
तदृहेकर्मात्र कर्तव्यमिति केषाञ्चिदाशयः ॥ ४७ ॥

---

त्वात् । अत एव चन्द्रस्य (स्वदिनगत्या समानीतस्य चन्द्रस्य) भूमध्यबिन्द्वागतत्वेन लम्बन-संस्कारावश्यकतोत्पद्यते कुजे भूपृष्ठगतस्य द्रष्टुः । अत उक्तरीत्या समानीतो ग्रहः भूमध्य-बिन्दोरेव समागत इति वेदितव्यः ।

(१) **भानोर्बृहत्त्वेनः**—तथा चोक्तम् "महत्वान्मण्डलस्यार्कः स्वल्पमेवापकृष्यते । मण्डलाल्पतया चन्द्रः ततो बह्वपकृष्यते ॥" (सू-सि-२-अ-९-श्लो) इति ।

(२) **अत्र**—तिथिसाधने इत्यर्थः ।

(३) **तिथौ**—तिथिसाधने इत्यर्थः ।

(४) **सायनार्केण**:—"तत्संस्कृताद्ग्रहात्क्रान्तिच्छायाचरदलादिकम्" (सू-सि-३-अ-९-श्लो) इत्युक्तेः सायनग्रहोऽत्र ग्राह्य इति भावः ।

(५) **तत्**—तस्माद्धेतोः ।

(६) **अत्र**—तिथावपीति भावः ।

(७) **केषाञ्चित्**—केषाञ्चिद् दृग्वादिनाम् ।

नायं युक्तिसहो यस्मात्तदभावेऽपि[1] तत्क्रियाः[2] ।
कर्तव्यत्वेन निर्दिष्टास्तस्मान्नात्र दृगादरः[3] ॥ ४८ ॥
यद्यस्ति दृक्; न नेत्रोत्था ग्राह्या शास्त्रैकगोचरा ।
नियत्याख्यस्तत्त्वभेदविशेषोऽस्ति यतस्तिथौ[4] ॥ ४९ ॥
तदभावेऽपि तत्कार्यकरणे चोदनैव सः[5] ।
नैवमन्यत्कालभागेष्वस्ति तत्तिथिगौरवम् ॥ ५० ॥
उदये पञ्चघटिका प्रतिपद्यदि तद्दिने ।
प्रातः सन्ध्यादिसङ्कल्पे गृह्यते प्रतिपत्तिथिः ॥ ५१ ॥
तदा प्रत्याब्दिके प्राप्ते द्वितीया साऽऽपराह्णिकी ।
सायं सन्ध्यादिकार्येषु पुनः सा प्रतिपत्तिथिः ॥ ५२ ॥

---

(१) **तदभावेऽपि**—तत्तिथ्यभावेऽपि ।

(२) **तत्क्रियाः**—तत्तिथौ कर्तव्यास्सन्ध्यावन्दनाग्निहोत्रादयो नित्याः ।

(३) **निर्दिष्टाः**—"यां तिथिं समनुप्राप्य" इत्यादिस्मृत्योपदिष्टाः । (कालमाधवीये) इत्यर्थः ।

(४) **तत्त्वभेदः**—षट्त्रिंशत्तत्त्वान्तर्गत इति भावः ।

षट्त्रिंशत्तत्त्वानि यथाः—परमशिवगतानि स्वतन्त्रता, नित्यता, नित्यतृप्तता, सर्वकर्तृता, सर्वज्ञता । एतान्येव जीवगतानि चेत् नियति, काल, राग, कला, अविद्याशब्दवाच्या भवन्ति ।

माया—जगत्परशिवयोर्भेदबुद्धिः ।
शुद्धविद्या—तयोरभेदः ।
जगदिदंतया पश्यन् परशिवः ईश्वरः ।
तदहंतया पश्यन् स एव सदाशिवः ।
शक्तिः—परशिवस्य जगत्सिसृक्षा ।
तद्वान् स एव तत्त्वेषु प्रथमः—शिवः ।
अष्टप्रकृतयः, षोडश विकाराः, जीव एकः (36) इति नित्योत्सवे त्रैपुरसिद्धान्तः ।

(५) **सः**—पूर्वोक्ततिथिविशेषः चोदनारूपः ।

2

न सा दर्शयितुं शक्या प्रतिपद्येन केनचित् ।
दृक्कर्मणा, ऽतश्शास्त्रैकशरण्ये दृङ्निरर्थकम् ॥ ५३ ॥

शशिन्यदृष्टे कर्तव्या दर्शे पिण्डपितृक्रिया ।
इत्यादिकण्ठघोषश्चेत्तत्र दृक्कर्म तावता ॥ ५४ ॥

तदुक्ताधिकसंस्कारकरणे नाधिकारिता ।
अतः परोक्षफलदा तिथिरित्युदिता मुहुः ॥ ५५ ॥

संस्कारा द्विविधास्तावत् दृगदृक्कर्मगोचराः ।
ग्रहावस्थितिसिद्ध्यर्थास्तथा गतिविशोधनाः ॥ ५६ ॥

यथा ; लम्बननत्याद्या दृक्कर्मफलदाः, परे ।
भुजान्तरमुखास्तद्वत् केवलं गतिशोधनाः ॥ ५७ ॥

अग्नीषोमात्मकत्वेन जगतश्चान्द्रसौरयोः ।
मासयोर्मेलनेनात्र व्यवहारः प्रवर्तितः ॥ ५८ ॥

स्त्रीशुक्रमात्रजनितपिण्डतुल्योऽधिमासकः ।
क्षयमासोऽपि निन्द्यस्स्यात् द्राजवच्छुभकर्मसु ॥ ५९ ॥

---

(१) **शशिन्यदृष्टे**—चन्द्रमस्यदृष्टे । "यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुते" इत्यापस्तम्बसूत्रादिति भावः ।

(२) **चान्द्रसौरयोः**—"ऐन्दवस्तिथिभिस्तद्वत्संक्रान्त्या सौर उच्यते" इति सौरोक्तिसम्पन्नयोः चान्द्रसौरयोरित्यर्थः ।

(३) **अत्र**—अस्मिन् विन्ध्यदक्षिणदेशे इत्यर्थः ।

(४) **स्त्रीशुक्र इत्यादिः**—अस्यायमर्थः—"यदा नार्यावुपेयातां वृषस्यन्तौ कथञ्चन । मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ।" इति सुश्रुतशारीरद्वितीयाध्यायत्रिचत्वारिंशसूत्रवचनात् केवलस्त्रीशुक्रजनितपिण्डस्य यथा चैतन्याभावस्तथा पुंशुक्रस्थानीयरविसंक्रान्तिहीनाधिमासस्य शुभकर्मकरणार्हताभावः । तथा द्विसंक्रान्तियुक्तक्षयमासस्यापि द्राजवन्निन्द्यता शुभकर्मसु इत्यर्थः ।

(५) **द्राजवत्**—अन्यस्य क्षेत्रे अन्यरेतोजात इत्यर्थः ।

द्युगत्याखेट[1]भूगर्भबिन्दू स्यातां समौ कुजे[2] ।
द्रष्टा भूपृष्ठगस्तस्मात्तदा लम्बनसम्भवः ॥ ६० ॥
चन्द्रस्य पि[3]तृलोकत्वात् तद्गतानां न भौमदृक्[4] ।
न तदर्थतिथौ[5] कार्यं विरुद्धफलदर्शनात्[6] ॥ ६१ ॥
एतत्सम्यग्विविच्यैव शास्त्रदृष्टेन वर्त्मना ।
लोकसंग्रहमेवापि बुद्धिमान् कर्तुमर्हति ॥ ६२ ॥

---

(१) **खेटभूगर्भबिन्दू**—स्वस्वाहर्गतिसाधितखेटस्य भूमेश्च—गर्भबिन्दू—(गोलगर्भस्थबिन्दू) इत्यर्थः। एतेन खेटगतिर्नाम तद्गोलगर्भगतबिन्दुगतिरिति वेदितव्यम्। अतो मुहूर्तमार्तण्डकाराभिमत इनमण्डलान्तपक्षो निरस्तः।

(२) **कुजे**—क्षितिजे। समौ स्यातामित्यर्थः।

(३) **पितृलोकत्वात्**—"त्रिंशता तिथिभिर्मासः चान्द्रः पित्र्यमहः स्मृतम्। निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः॥" (सू-सि-१४-अ-१४-श्लो) "सोमः पितृमान् यमोऽङ्गिरस्वान् अग्निष्वात्ताग्निः कव्यवाहनादयो ये पितरः" (आपस्तम्बवचनम्) "विधूर्ध्वभागे पितरो वसन्ति" (सिद्धान्तशिरोमणिः) इत्यादिवचनैश्चन्द्रस्य पितृलोकत्वमुपपन्नम् तस्मादित्यर्थः।

(४) **भौमदृक्**—भूगतजनादरणीयदृक्कर्मेत्यर्थः।

(५) **तदर्थतिथौ**—तत्पित्रुपयोगितिथौ। तादृशतिथिसाधनहेतुभूतरविचन्द्रयोरिति भावः।

(६) **विरुद्धफलदर्शनात्**—यथा चन्द्रमेकत्रावस्थितमन्यत्र दर्शयित्वा फलविपर्यासं जनयति लम्बनसंस्कारः तथा सर्वमपि दृक्कर्मेति ज्ञेयम्। किञ्च, भूगोलेतर चन्द्रगोलस्थितानां पितॄणाम् "अर्काद्विनिस्सृतः प्राचीं यद्यात्यहरहश्शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः॥" (सू-सि-१४-अ-१२-श्लो) इति सौरोक्ततिथिनिरुक्तेः अर्केन्द्वन्तरद्वादशांशमात्र परिमितिरूपतिथिजन्य फलकाङ्क्षिणां भौमदृक्कर्मानपेक्षा सुष्ठूपपद्यत एव। अतस्तादृशतिथिसाधनभूतरवीन्द्वोः अनुकूलतरदृक्कर्म—समदीर्घवृत्तान्तरजन्यमन्दफलसंस्कृतिमात्रमुपदिशति सौरतन्त्रम्। 'मान्दं कर्मैकमर्केन्द्वोः' इत्यत्रत्यैकमिति पदं स्मारयतीममर्थम्। दीर्घवृत्तीयगतिमतः खेटस्य समवृत्ताऽऽगमनदोषवारणायायं मन्दफलमात्रसंस्कारोऽङ्गीकृतः सौरे। अतस्तिथिसाधने दृक्कर्म न कार्यमिति विदांकुर्वन्तु महान्तः।

शोभेकृद्वत्सरेजात उक्तरीत्याऽऽश्विनोऽधिकः ।
क्षयो मार्गशिरः किन्तु न मान्योऽत्र दृगादरः ॥ ६३ ॥

दैवज्ञसार्वभौमोऽस्मद्गुरुश्चूडामणाविमम् ।
राज्ञीवंश्योऽप्येवमाह नृसिंहोऽर्कागमानुगः ॥ ६४ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यत्याद्यन्वर्थसकलबिरुदावली-विराजमानश्रीविद्याशङ्करपद्मासेशप्रकाशितशृङ्गेरीश्रीविरूपाक्षश्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारती शिष्यश्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु विमर्शामृते तिथितत्त्वविमर्शो नाम प्रथमबिन्दुः ॥

---

(१) **शोभकृद्वत्सरे**—कल्यादि ५०६५ वत्सरे ।

(२) **दृगादरः**—दृक्कर्मविषयकासक्तिः ।

(३) **दैवज्ञसार्वभौमः**—गतत्रिषष्टिवर्षीयप्लवाधिमासविषयकमहासभायां राजमहेन्द्रनगर्यामेवमाप्तबिरुद इत्यर्थः ।

(४) **अस्मद्गुरुः**-अस्मत्पूर्वाश्रमोपाधिजनकः । एतदाश्रमे श्रीशृङ्गेरीश्रीविरूपाक्षपीठाधीश्वर शाङ्कराचार्य जगद्गुरुश्रीबोधानन्दभारतीमहाचलाख्यः परमेष्ठिगुरुश्च ।

(५) **चूडामणौ**—स्वयकृतचूडामण्याख्ये ज्योतिषग्रन्थे ।

(६) **इमम्**—एतं पूर्वोक्तक्षयमासविषयमित्यर्थः ।

(तथा चोक्तं चूडामणौ आश्वयुजमासं प्रति ३४ पुटे)

रामपूर्णाब्जभूतुल्य (१६०३) शाके संसर्पसंज्ञकः ।
गतो ह्याश्वयुजः पश्चादधिकोऽङ्केन्दु (२९) वत्सरैः ॥ २३ ॥

कृति धृति (१८२०) मितशककाले
ह्यधिकः पश्चाच्छराङ्ग (६५) मितवर्षे ।
संसर्पोऽङ्केन्दुभि (१९) रथ
त्रिवारमङ्केन्दुभि (२९) स्त्वधिकः ॥ २५ ॥

यातोऽन्यम्बरभूप (१६०३) संमितशके मार्गः क्षयस्तत्परं
क्लिन्द्रै (१४१) र्यति अहो भविष्यति ततः क्लिन्द्रैः (१४१) शराङ्गैः (६५) पुनः ।
संसर्पश्च क्षयाह्वयश्च स भवेन्नन्देन्दु (१९) वर्षैस्ततः
पश्चाद्भूधरबाण (५७) वत्सरमितैरंहस्पतिस्सम्भवेत् ॥ २८ ॥

(७) **अर्कागमानुगः**—सूर्यसिद्धान्तानुसारीत्यर्थः । यथाः—

"सौरोपनिषदेवाद्या कल्पे त्वस्मिन् सनातनी ॥

## ॥ तिथितत्त्वविमर्शपरिभाषा ॥

आरम्भस्थानम्—First point of Aries.
उत्तरक्रान्तिः—Summer solstice.
उन्नतांशः—Altitude.
कक्षा—Orbit.
कक्षागतिः—Motion of the Orbit.
क्रान्तिवृत्तम्—Ecliptic.
केन्द्रच्युतिः—Focal distance.
खेटः, ग्रहः—Planet.
ग्रहगतिः—Motion of the Planet.
ग्रहणम्—Eclipse.
तिर्यक्त्वम्—Obliquity of Ecliptic.
दक्षिणक्रान्तिः—Winter Solstice.
द्रष्टा—Observer.
दीर्घवृत्तम्—Elipse.
देशान्तरम्—Longitudinal difference.
देशान्तरसंस्कारः—Correction for longitudinal difference.
नतांशाः—Co-altitude or zenith distance.
नतिः—parallax.
नाडीमण्डलम्—Terrestrial equator.
पार्श्वकेन्द्रम्—Side focus (focus).
भुजान्तरम्—Equation.
मध्यकेन्द्रम्—Central focus.
लम्बनम्—Error of Parallax.
विषुवन्मण्डलम्—Celestial equator.
संपातः—Equinox.

---

यामादित्यः स्वयं प्राह मयाय परिपृच्छते ॥
कालज्ञानन्तु तत्सिद्धं विशुद्धं नान्यदुच्यते ।
तद्विरुद्धन्तु यत्सर्वमपरिग्राह्यमेव तत् । ’’
इति चूडामणिप्रस्तावनायां १५ पुटे व्यासोक्तिनिरूपणादिति भावः ।

॥ श्रीः ॥

## ॥ ऋतुहेतुविमर्शो नाम द्वितीय बिन्दुः ॥

पृथग्विरधतस्मादर्कवीन्दू ऋतुहेतुकौ ।
नानालिङ्गत्वनिर्देशाच्चन्द्रमा इति च श्रुती ॥ १ ॥
ऋतुहेतुमतश्चन्द्रं केचिद्रूचुरिनं परे ।
नैतद्वादयुगं साधु यद्द्विसाध्यं हि नैकतः ॥ २ ॥
यथा तिथिस्सूर्यचन्द्रगतिभ्यां साध्यते तथा ।
तज्जन्यर्तुगणश्चापि ताभ्यां संसाध्यतामियात् ॥ ३ ॥
पितृभ्यां जन्यगर्भस्तु न मातुर्वा पितुर्न हि ।
गतिः पद्युगजन्या सा नैकपादेन जायते ॥ ४ ॥
यथा परिपतन्पक्षी पक्षाभ्यां गगने गतिम् ।
कलयेदार्तवीं कालः पुष्पवद्भ्यां तु नैकतः ॥ ५ ॥
इममर्थं विपश्चे च पूर्वापरमिति श्रुतिः ।
तस्मादर्केन्दुयुग्मेन सिद्धेयं सृष्टिरार्तवी ॥ ६ ॥

---

(१) **नानालिङ्गत्वनिर्देशात्**—नानालिङ्गत्वनिरूपणात् । तथा च श्रुतिः— "नानालिङ्गत्वादृतूनां नानासूर्यत्वम्" (अरुण–२५) इति ।

(२) **चन्द्रमा इति**—"चन्द्रमाः षड्ढोता । स ऋतून् कल्पयाति" (चित्ती–९) इति च श्रुतिः ।

(३) **पूर्वापरमिति**—"पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्टे । ऋतूनन्यो विदधज्जायते पुनः ।" (ऋग्वेदः) अस्यायमर्थः—एतौ शिशू—सूर्य चन्द्राख्यौ शिशू । पूर्वापरम्—प्राक्पश्चिमम् । चरतः । मायया प्रकृतिरूपया । क्रीडन्तौ—पर्यायप्रधावनक्रीडासक्तौ । अध्वरम्—यज्ञम् । "मिथुनत्वाय यज्ञक्तिः प्रायणो वै यज्ञः" इति श्रुत्युक्तलक्षणलक्षितसृष्टिरूपं यज्ञमिति यावत् । परियातः—परित उपसर्पतः । तद्यज्ञनिष्पादनार्थमित्यर्थः । तथा च स्मर्यते—"उन्मेषनिमिषोत्पन्नविपन्नभुवनावलिः ।" (ललितासहस्रनामसु) इति । अस्यायमर्थः—मायाऽपरनाम्न्याः श्रीपरमेश्वर्याः नेत्रभूतसूर्यचन्द्रयोरुन्मेषनिमेषजन्यप्रादुर्भावतिरोधानाभ्याम् अनेककोटिब्रह्माण्डसृष्टिलयौ भवत इत्यर्थः । अन्यः—तयोरेकः सूर्यः । विश्वानि भुवना-

सर्वभुवनानि। अभिचष्टे–सर्वतो भ्रमतीत्यर्थः। अन्यो—इतरश्चन्द्रः। ऋतून्–वसन्तादीन्। पुनः—पौनःपुन्येन। विदधज्जायते–ऋतुरचनां कुर्वन्नेव जायते। अत्र "निवेशनी सङ्गमनी वसूनां विश्वा रूपाण्यावेशयन्ती" (तै-सं-३-५) इति मन्त्रोक्तवसुसम्पत्ति-प्राप्तिहानकारणं सूर्य एव हि। तथाविधप्राप्तिहानाभ्यामेव चन्द्रस्य ह्रासः पुनर्जननं च सम्भवति। तादृशसूर्यस्यैकस्थानानवस्थितेः ऋतूनां नानालिङ्गजनकत्वसम्भवात् तद्विद-धाति "नानालिङ्गत्वादृतूनां नानासूर्यत्वम्" (अरुण-२५) इति। अत्र सूर्यस्यैकस्थानानव-स्थितिर्नाम न केवलं क्रान्तिवृत्तीयरविगतिमात्रजन्या—किन्तु सम्पातगतिजायनां-शजन्या च॥

आः! कोऽयं सम्पातः? तेन रवेः कः सम्बन्धः? इति चेदुच्यते :—विषुवत्-क्रान्तिवृत्तयोस्सन्निपातजः सम्पातः—क्रान्तिवृत्तस्य रविकक्षात्वव्यवहारेऽपि वास्तवदृशा भूकक्षात्वं निरूपितं हि तिथितत्त्वविमर्शबिन्दौ। आकृष्याकर्षकनामव्यत्यासेऽपि कक्षाया न हि गणितवैषम्यम्। अतस्तथा व्यवहारो रविकक्षेति। अतो भूकक्षैव हि क्रान्तिवृत्तम्। तथा च विषुवद्वृत्तं भौममेव। यत इदं भौमनाडीमण्डलानर्थान्तरम्। अनयोः (नाडीमण्डल-विषुवद्वृत्तयोः) देशभेदावस्थितिवशादुत्पन्ननामभेदेऽपि स्वरूपसम्बन्धेनैकत्वसिद्धेः। एतेन भौमक्रान्तिवृत्तीयरविगतिवशात् यथा रवेरेकस्थानानवस्थितिस्तथा भौमविषुवक्रान्ति-वृत्तयोस्सन्निपातजा (सम्पातजा) यनांशवशादपि रवेरेकस्थानानवस्थितिरित्यत्र न कोऽपि दोषः–तस्यापि स्यादृतुलिङ्गभेदहेतुत्वम्॥

**अथास्ति तृतीयो हेतुः**—सूर्यस्यैकस्थानानवस्थितेः। तदेतत्:—स्वाकर्षकं प्रद्युम्नं परितः स्वकक्षायां रविभ्रमणजन्या–शतवार्षिकी ह्यर्धकलात्मिका मध्यमगतिः "महायुगो वास्तवसौरवर्षः" इति कालमानोपपत्तिवचनात्तदपि ऋतुलिङ्गभेदकारणं स्यादिति चेत्सत्यम्। परन्तु नैतत्कारणं भवितुमर्हति ऋतुलिङ्गभेदस्य यत इयं भूमिः स्वस्यां जायमानानाम् ऋतूनाम् कारणभूतं रविं मेधीकृत्य भ्रमति तत्परितः। अतस्तत्सहचारित्वाद्भूमेस्तत्र (भूमौ) तद्रविगतेः अप्रचारः। तस्या रविगतेरुभयोः रविभूम्योः समानत्वादृतुलिङ्गभेदहेत्वभावः। न हि भ्राम्यभ्रामकयोर्गतिसाम्यम् ताव-त्तिर्यक्त्वादिगतिभेदजन्यर्तुलिङ्गभेदकारणत्वं प्रतिपद्यते। अथैतादृशसूर्यतेजोमूर्च्छित चन्द्रमस एव पौनःपुन्यजननम्-तेन चान्द्रमासानां निष्पत्तिः तेभ्यो ऋतूनां च। अतः "विदधज्जायते पुनः" इति चन्द्रस्य विशेषणं विदधाति श्रुतिः। एतेन सूर्यतेजोऽनुप्रविष्टस्सन् चन्द्रो वसुमान् भूत्वा ऋतुकर्ता भवति न केवलं दर्शचन्द्र इति सिद्धम्॥

किञ्च; यस्य कस्यचित्कार्यस्योत्पत्तिर्नैकवस्तुमात्रेण—"स वै नैव रेमे। तस्मा-देकाकी न रमते। स द्वितीयमैच्छत्। स एतावानास। यथा स्त्रीपुमांसौ परिष्वक्तौ। स इममेवात्मानं द्वेधाऽपातयत्। ततः पतिश्च पत्नी चाभवताम्। ततो मनुष्या अजायन्त।" (शतपथ ब्राह्मणम्) इति श्रुतेः॥

ये द्वे कालमितीदं यदभियुक्तवचस्त्विमम् ।
ब्रूते ; सृष्टेरार्तवीत्वम् ऋतुजन्यत्वतः स्मृतम् ॥ ७ ॥
प्रवृत्तिर्वा निवृत्तिर्वा वचनादेव चिन्त्यताम् ।
मर्यादैषा शास्त्रजेऽन्यत्रार्थापत्तियोनयः ॥ ८ ॥
निषेधादर्शनादत्र पृथगुक्तयोस्समुच्चयः ।
प्रायश्चित्तीयपश्वोस्तु सोमपानविधाविव ॥ ९ ॥
गौतमो यदि सर्वज्ञः कणादो नेति का प्रमा ।
इत्येतज्ज्ञानहेतुस्स्यान्निषेधादर्शनं खलु ॥ १० ॥
तण्डुलानोदने हेतुमेकोऽन्यो जलमब्रवीत् ।
निषेधादर्शनादत्र द्वयोर्हेत्वोस्समुच्चयः ॥ ११ ॥

किञ्च—

अज्ञानतमसोहन्ता चित्सूर्यो भाति च स्वयम् ।
यज्ज्ञानाज्ज्ञानिनो मुक्ता भवेयुर्भवबन्धनात् ॥ १२ ॥

---

अपि च "तदैक्षत बहुस्यां प्रजायेय" इत्यादिना ईक्षणात्मकमूलप्रकृतिसहकृतपर-मात्मन एव सृष्टिप्रादुर्भावः—न केवलं शुद्धात्मनः । तथा च स्मर्यते—"शिवःशक्त्या युक्तो यदि भवति शक्तः प्रभवितुम् न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।" (सौन्दर्यलहरी) इति । अतो न विवदितव्यम् । अलं विस्तरेण ॥

(१) **ये द्वे कालमितिः**—ईश्वरस्याष्टमूर्तीर्निरूपयन् कालिदासोऽपि शाकुन्तल-नाटके मङ्गलाचरणमेवं तनुते "या सृष्टिस्स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ये द्वे कालं विधत्तश्श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।" इत्यादि । अत्र कालजनकौ सूर्यचन्द्रावुभावपि सूचयति ।

(२) **स्मृतम्**—उक्तमित्यर्थः । वायुपुराणादिष्विति शेषः ।

(३) **अन्यत्र**—शास्त्रादितरत्र । वेदेतरालङ्कारादिलौकिक इत्यर्थः ।

(४) **प्रायश्चित्तीयपश्वोः**—विच्छिन्नसोमपानसन्धानार्थमेकः—दौर्ब्राह्मण्यनि-वृत्त्यर्थमपर इत्युक्तपश्वोरित्यर्थः ।

(५) **चित्सूर्यः**—चिदिति सूर्यः चित्प्रतीकसूर्य इत्यर्थद्वयमत्र प्राह्यम् । तथा चोक्तं चित्सूर्यालोकनाटके । यथाः—"अज्ञारोप्यनिजेतरक्रियमपि ज्योतिः परं निष्क्रियं वेद्यं ज्ञानिभिरेव साक्षिणमिडाधारं विभुं प्रेरकम् । स्वापग्रस्तमनोवदेव च मनश्चन्द्रेण संग्रस्तवच्छुद्धं चाप्यवभासमानममलं चित्सूर्यमीक्षामहे ॥" इति । (राज्ञीमहाग्निचिन्त्सिंह-देवसार्वभौमविरचितम् चित्सूर्यालोकनाटकम्) ।

तच्छित्सूर्यखरांशूनां म्रदिमापादनाच्छशी ।
चिज्जडात्मकसर्गस्य कारणत्वं प्रपद्यते ॥ १३ ॥
चित्सूर्यतेजस्सान्निध्यमिन्दुबिम्बो मनोमयः ।
तद्द्वयोर्योगतस्सर्गस्तदयं चिज्जडात्मकः ॥ १४ ॥
मायाऽमयोस्तु देवत्वं कर्तृतासिद्धयेऽर्पितम् ।
तथापि ते जडे एव न हि चित्परमात्मनः ॥ १५ ॥
तदिन्दौ मूर्च्छितं तेजो वसुर्विश्वोद्गतावृतुः ।
अतस्त्वृतून्करोतीन्दुरिति वेदानुशासनम् ॥ १६ ॥

---

(१) **तेजस्सान्निध्यम्**—एकत्र मायायामात्ममूर्च्छनारूपम्—अन्यत्र चन्द्रबिम्बे सूर्यकिरणमूर्च्छनारूपम् । उभयत्र मायाचन्द्रबिम्बयोरवरोधात् क्रमेण ज्ञान (भर्ग) कौमुदी-रूपपरिणामो भवतीत्युक्तपूर्वमेव अस्मदीय ब्रह्मावगत्युपन्यासे। उक्तदिशैतत्तेजसो जडत्वेऽपि चित्सूर्यपरिणामित्वाच्चित्त्वमुपपन्नमवशिष्टस्य जडत्वं च । अतस्तदुभयजातसर्गस्य चिज्जडत्वम्।

(२) **सर्गः**—सृष्टिः । तत्स्वरूपं किञ्चिदिवोच्यते । यथाः—अत्रोक्तचित्सूर्यते-जश्चन्द्रयोर्योगेन प्रथमं वसुरूपाः कलाः सृष्ट्वा निवेशन सङ्गमन (स्वात्मनि लयरूपसङ्गमन) क्रियाभ्यां तासु विश्वा रूपाणि (चिज्जडात्मकजगद्रचनाहेतुस्वरूपाणि) प्रवेशयत्येषाऽमेति श्रूयते "निवेशनी सङ्गमनी वसूनां विश्वा रूपाण्यावेशयन्ती" (तै-सं-३-५) इति । अत्रा-माधाः मायाप्रतीकत्वमुपपन्नं भवति चित्सूर्यखरांशूनां म्रदिमाजननद्वारा सृष्टिहेतुभूतचन्द्र-कलाजनकत्वात् । अत्र यद्यपि चित्सूर्यतेजश्चन्द्रयोरेव कारणत्वं तथापि तयोर्जडत्वदोषवा-रणाय मायामयोर्देवतयोरुपादानम् । तयोः कर्तृता तावत् चित्सन्निधानादेव न स्वतः । अतस्ते जडे एव । तयोरुपकरणभूतमनश्चन्द्रयोरपि जडत्वम् उपकरणत्वात् । किन्तु तज्ज-न्यसर्गस्तावच्चिज्जडात्मकः तयोश्चित्सान्निध्यवशादिति वेदितव्यम् ।

(३) **परमात्मनः**—आत्मनः परम् । नन्वात्मनः परमिति यदुक्तम् तदसत् 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेरिति चेन्नायं दोषः ; आत्मेतरस्य मिथ्याप्रसिद्धेः ।

(४) **ऋतुः**—काले वसन्तादिरूपः स्त्रीष्वार्तवरूपः । यदायं जीवनिष्पत्तिकारणं तदा ऋतुसंज्ञितो भवतीत्यन्वयः । वसूनां जीवनिष्पादकत्वम् श्रुतिसिद्धम् । 'वसूनां विश्वा रूपाण्यावेशयन्ती' (तै-सं-३-५) इति श्रुतेः । स्त्र्यार्तवस्य चान्द्रत्वसद्भावादेव तद्विषयकशास्त्रस्य कलाशास्त्रम् इति प्रसिद्धिः ।

(५) **वेदानुशासनम्**—"चन्द्रमाः षड्ढोता । स ऋतून् कल्पयाति ।" (तै.ब्राह्मणम्) इति वेदोक्तिः ।

कालार्तवदेवं स्त्र्यार्तवं जन्महेतुकम् ।
तद्ब्रह्मविमुखत्वेन तद्धत्याजमिति श्रुतिः ॥ १७ ॥
अथ स्त्र्यार्तवस्य ब्रह्महत्याजन्यत्वं विशिनष्टि:-
ब्रह्महत्येन्द्रदत्ताभूत् ऋतुरूपा स्त्रियां किल ।
तद्योगाज्जीवनिष्पत्तिरात्मनो जीवतेक्षतेः ॥ १८ ॥
तदृतुं पङ्कमित्याहुरविद्यां ज्ञानिनो यथा ।
तादृगृतुभवा सृष्टिरार्तवी पङ्कजा स्मृता ॥ १९ ॥
तस्मादृतुमतीं दूरे त्यजन्ति दिवसत्रयम् ।
औत्कट्यदोषहानार्थं नौत्कट्ये तु फलोदयः ॥ २० ॥
कर्मठानामयं धर्मस्तेऽविद्याजीविनो यतः ।
विद्यावतां पुनर्योषित्सहवासादि दूषितम् ॥ २१ ॥

---

(१) इन्द्रदत्ता :—इन्द्रेण स्त्रीभ्यः प्रदत्ता । पुरा किल विश्वरूपनामकपुरोहित-हननात् समागतां ब्रह्महत्यामिन्द्रः स्त्रीभ्यो दत्त्वा ताभ्यो वरं चादात्—"प्रजा वो भविष्यति—अपेक्षितः पुरुषसङ्गमस्सम्भविष्यति ।" इति च कथा श्रूयते कृष्णयजुर्वेदे । यथा:— "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्........काममन्यस्य स स्त्रीषँसाद उपासीद तस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति—ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजा विन्दामहै काममाविजनितोस्सम्भवामेति—तस्मादृत्वियात् . स्त्रियः प्रजां विन्दन्ते—काममाविजनतोः सम्भवन्ति" (तै-सं-२-५-१) इति । सा ब्रह्महत्या स्त्रीषु ऋतुरूपा बभूव इन्द्रवरानुरोधेन सृष्टिहेतुश्च ।

(२) औत्कट्यदोषहानार्थम्—ऋतुरूपस्य आर्तवस्य (स्त्रीरजसः) औत्कट्य-दोषः प्रमाणाधिक्यरूपदोषः तद्धानार्थम् । "प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यम् ...............न च प्रवर्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति—यथा नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्तते—नोर्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मात् नियमवतीं त्रिरात्रं परिहरेत् ।" (सु-शा-२-३०) इति ।

(३) दूषितम्—निषिद्धम् । तथा च श्रूयते "न मांसमश्नीयात् न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात्" (कूश्माण्डसूक्तम्) इति "वारे वृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन् सा मलवद्वासा अभवत्—तस्मान्मलवद्वाससा न संवदेत ॥ ५ ॥ न सहासीत नास्या अन्नमद्यात्....... ॥ ६ ॥ (तै-सं-२-५-२) इत्यादिना स्त्रीरजः मलपदेन निर्दिशति श्रुतिः । ऋतुरजः पापरूपत्वादुपसन्नम् ।

ब्रह्मज्ञ हननाल्लोके तज्ज्ञानं नष्टतामियात् ।
अतस्तद्धननं ब्रह्महत्येति कथिता बुधैः ॥ २२ ॥

तस्मादिदं महत्पापमिति पापेषु गण्यते ।
न पुन र्ब्रह्मणस्तावद्धननं नित्यवस्तुनः ॥ २३ ॥

मोक्षहेतुर्यतो ब्रह्मज्ञानं तल्लोपतः परम् ।
नास्ति पापमतो गुर्वी ब्रह्महत्याऽघराशिषु ॥ २४ ॥

मोक्षात्परं फलं नास्ति जन्मिनां तत्तथोदितम् ।
निरवद्यमिदं सर्वमुक्तं सद्बुद्धिगोचरम् ॥ २५ ॥

तस्मादृतूनां हेतुस्स्यान्नार्को वा चन्द्रमाः पृथक् ।
किन्तूभे कारणं तेषाम् गर्भस्य पितराविव ॥ २६ ॥

तस्मादिदं जगत्सर्वम् अग्नीषोममिति स्मृतम् ।
एतद्विविच्य विद्वांसो विरम्यन्तां विवादतः ॥ २७ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावली-विराजमानश्रीविद्याशङ्करपदमावेशप्रकाशितश्रृङ्गेरीश्रीविरूपाक्ष श्री पीठाधीश्वरजगद्गुरु श्रीसदाशिवा नन्दभारतीशिष्यश्रीपरिपूर्ण प्रकाशानन्द भारतीमद्वायतिकृतिषु विमर्शामृते ऋतुहेतुविमर्शो नाम द्वितीय बिन्दुः ॥**

---

॥ श्रीः ॥

# भूभ्रमणनिरासमण्डनं नाम तृतीयबिन्दुः

## प्रथमो भागः ।

(श्री श्रीमदप्पय्यदीक्षितकृतन्यायरक्षामणौ १-अ-१-पा-
आकाशाधिकरणम् )

"आकाशस्तल्लिङ्गात्" इति सूत्रव्याख्याने भूभ्रमणवादनिरासः । यथा:----"अप्रतिष्ठितं वै किल ते दाल्भ्य साम" इति श्रुतिव्याख्यासन्दर्भे "प्रतिष्ठात्वं ह्यत्र नोपजीव्यत्वम्, किन्तु निश्चलत्वरूपं प्रतिष्ठितत्वम्—तद्धि स्वर्गलोके ज्योतिश्चक्रान्तःपातित्वेन भ्रमति—अप्रतिष्ठितत्वदोषोद्भावनापूर्वकं पृथिव्यां तत्परिजिहीर्षया वर्णितम् । आर्यभट्टाभिमतस्तु भूभ्रमणवादः पुराणादिभिः 'आकाशे पृथिवी प्रतिष्ठिता' इति श्रुत्या अनेन च प्रतिष्ठात्ववचनेन विरुद्धत्वात् बाध्यः । अत एव मत्स्यजिघृक्षुपक्षि शुष्कालाबूफलदृष्टान्तावलम्बनाभ्याम्—जैनयवनाभ्याम् कल्पितौ भूपतनप्लवनवादावपि हेयौ । पक्षत्रयेऽपि (भूभ्रमण पतन प्लवन रूप पक्षत्रयेऽपि) वियत्क्षिप्तपाषाणखण्डादीनां पुनरपि क्षेत्रप्राप्त्यभावप्रसङ्गाच्च ।" (न्यायरक्षामणि ५२-पृ) इति यदुक्त तत्समाधानरूपोऽयं मण्डनग्रन्थः ।

नायं दोषः । महावाक्यगतौ युष्मदस्मदर्थौ समावपि । स्वेतरान्वयतोऽध्यासे जडचिद्भेदभावदौ ॥ १ ॥ तथा स्थिरचरौ धर्मौ स्यातां स्वेतरयोगतः । व्यवहारदृशैवेत्थं न तत्त्व प्रतिपत्तये ॥ २ ॥ अस्य श्लोकद्वयस्य अयं भावः—अध्यासभाष्योक्तयुष्मदस्मत्प्रत्ययगोचरयोर्यज्ञदत्तदेवदत्तयोर्विषयत्वं विषयित्वं वा खल्वन्योन्यसापेक्षम् महावाक्यार्थावगमात् । अतोऽस्मत्पदवाच्ये देवदत्ते यज्ञदत्ते वा चित्त्वम् इतरस्मिन् जडत्वं भवितुमर्हति युष्मत्पदवाच्यत्वञ्च । ननु "युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोः" इति यदुक्तमाचार्यैर्युष्मदस्मत्प्रत्ययद्वैरूप्यम् तस्य "तत्त्व-

मसि " " अहं ब्रह्मास्मि " इति महावाक्योपदिष्टाभेदप्रतिपत्त्या विरुध्यमानत्वादनुचितोऽयमुपन्यास इति चेदुच्यते ।

यद्यपि तयो (युष्मदस्मत्प्रत्यययो) रभेदश्श्रुतिसिद्धस्तथाप्यस्ति व्यवहारे तत्प्रत्ययनिष्पत्ति भेदः । यथाः—'त्वं देवदत्त' इत्याकारक युष्मत्प्रत्यये वा 'अयं घट' इत्याकारकयत्किञ्चिद्वस्तुप्रत्यये वा तत्तन्निष्ठगुणग्राहकेन्द्रियजन्यज्ञानसहकृतिरवश्यं भाविनी । न तथाऽस्मत्प्रत्यये अस्मत्प्रत्ययगोचरस्य स्वयंप्रकाशमानत्वात् । अतो यथा दीपसहकृतिजन्य घटादिजडवस्तुज्ञानम् तथेदमपि (देवदत्तादिज्ञानमपि) नेत्रादीन्द्रियजन्यज्ञानसहकृतिजन्यत्वेन जडवस्तुविषयकं भवितुमर्हतीति निरूपितं स्याद्भाष्यगतगोचरपदेन ।
उक्तार्थो भङ्गयन्तरेणोच्यते :—

आत्मा तावन्नेन्द्रियार्थो यदि स्याज्जड एव सः ।
तदिन्द्रियार्थजडयोरन्वयव्यतिरेकिता ॥

निरिन्द्रियो योऽविषयी विषयी सेन्द्रियो भवेत् ।
सर्वथा जड एव स्याद्विषयो व्यावहारिकः ॥

इन्द्रियापेक्षतद्भिन्नौ प्रत्ययौ युष्मदस्मदोः ।
तस्मात्तौ जडचित्संज्ञौ क्रमादाचार्यभाषितौ ॥

इति ।

एवमध्यास भाष्ये स्वेतरयोश्चिज्जडत्वान्वयः । तथैव स्थिरचर धर्मावपि स्वेतरयो र्योगतः स्याताम् । स्वस्मिन् स्थिरत्वम् इतरस्मिन् चरत्वमिति विवेकः ; " नित्यस्सर्वगतः स्थाणुः " इति स्मृत्या स्थाणुत्वनिर्देशादात्मनः । सैषा उपासनाविधौ व्यावहारिकदृष्टिः उपासनाया भावनासाध्यत्वात् तदुक्ताभिधार्थस्य अवस्तुस्त्वात् तत्त्वे तावन्निर्गुणे स्थिरचरत्वादिगुणप्रसङ्गाभावाच्च न तात्त्विकी । एतेन " निश्चलत्वरूपं प्रतिष्ठितत्वम् । तद्धि स्वर्गलोके ज्योतिश्चक्रान्तःपातित्वेन भ्रान्ति—अप्रतिष्ठितत्वदोषोद्भावनापूर्वकं पृथिव्यां

तत्परिजिहीर्षया वर्णितम् ।" इति यदुक्तम् अप्पैय्यदीक्षितैस्तत्केवलवर्णनामात्रमिति वेदितव्यम् वर्णितमिति पददर्शनात् ।

किञ्च "पृथिवी वान्नम् । आकाशोन्नादः । पृथिव्याम् आकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता" इत्यादिश्रुतिसिद्धान्नत्वाधारत्वादिधर्मास्तावदुक्तदिशा द्वयोरेकस्मिन् स्वपदवाच्य एव स्थिरत्वं च भावनया सम्भवति—नान्यथा । अत एतेनार्यभट्टभूभ्रमणवादो विरुध्यते तन्मते (आर्यभट्टमते) पृथिव्याः परिमितत्वात् भ्रमणव्यापारविशिष्टवस्तुविषयत्वाच्च । अस्याः पुनः 'पृथिवी वान्नम' इत्यन्नत्वश्रुत्या अन्नरूपत्वेन अन्नस्य "प्राणो वा अन्नम्" "आपो वान्नम्" इत्यादिश्रुतिभिः अपरिमितत्वमुपास्यत्वञ्चोपपन्नम् । अत एव श्रीमदप्पैय्यदीक्षितैः "आर्यभट्टाभिमतस्तु" इत्याद्युत्तरग्रन्थो वर्णितः । एतेन न खण्डित आर्यभट्टभूभ्रमणवादः किन्तु पृथक्कृत इति विदांकुर्वन्तु महान्तः ।

अपि च

भूमिं विसृज्य किल मत्स्यजिघृक्षुपक्षी
खे तिष्ठतीति भवदाशय एव विद्वन् ।
नैतावता खलु नभःस्थितवस्तुनि स्या-
द्भूमेस्तु कर्षणमनर्थकृदित्यवेहि ॥ १ ॥

यत्र कुत्र स्थितस्यापि वस्तुनःप्रेरणं विना ।
गतिरूर्ध्वमथो वाधः तिर्यग्वेति ध्रुवं वचः ॥ २ ॥

आकाशे स्थापितं वस्तु न किञ्चित्तत्र तिष्ठति ।
नोर्ध्वं याति न तिर्यक् च पतत्येव भुवं गुरु ॥ ३ ॥

खस्थायश्शकलं गच्छेदूर्ध्वमेवोर्ध्वगो यदि ।
कान्ताश्मातद्व्यक्तिशक्त्याऽऽकृष्टं तन्न पतेदधः ॥ ४ ॥

---

(१) ध्रुवं वचः—सिद्धान्तसूत्रम् (Fundamental Rule)

धरेति प्रथिता भूमिर्धारणाज्जगतोऽन्वहम् ।
तथापि[1] व्यक्तिशक्त्येदं[2][3] चलनादिस्वकर्मकृत् ॥ ५ ॥
स्वाधारव्यक्तिशक्त्योस्तु बलाबलविनिर्णयः ।
पाश्चात्यद्रव्यशास्त्रीयगणिते[4] ज्ञायताम् स्फुटम् ॥ ६ ॥
भूमेरूर्ध्वं पुनर्गच्छेत् क्षिप्तं चेत्क्षेपशक्तितः ।
भूमेराकृष्टशक्तित्वात् तयाकृष्टं[5] पतत्यधः ॥ ७ ॥
कपित्थाकारभूगोलः सर्वं स्थावरजङ्गमम् ।
स्वशक्त्या[6] धरते कान्ताश्मेवायश्शकलं लघु ॥ ८ ॥
नो चेदस्मदधोभागे कुरुवर्षगतो जनः ।
अस्मद् दृष्ट्या त्वधस्तेषां[7] दृष्ट्योर्ध्वं वा क्वचित्पतेत् ॥ ९ ॥
एतादृङ्महती शक्तिर्भूमेर्नास्तीति ये विदुः ।
तद्दृष्टौ पश्चिमां पक्षी गच्छेन्मत्स्यग्रहो भुवः ॥ १० ॥
भूम्याकर्षणबद्धत्वात् पक्षिणो न हि पश्चिमा ।
गतिः किन्तु नभस्यस्य स्थित्यादिः स्वीयशक्तितः ॥ ११ ॥

---

(१) **तथापि**—तदाधारतया भूम्या धारितमपि स्थावरजङ्गमात्मकं सर्वं वस्तु जातं स्वाभिमुखं कर्षन्ती भूमिः धरति निश्चलं स्थापयति तथापीति भावः ।

(२) **व्यक्तिशक्त्या**—मनुजादिप्रतिव्यक्तिगतशक्त्या । मनुजादिजङ्गमवस्तु-भूम्याधारवदपि स्वशक्त्या तावच्चलनादिकर्म करोत्येव, किन्तु भुवं न सर्वात्मना विसृजति ।

(३) **इदम्**—स्थावरजङ्गमात्मकं जगत् ।

(४) **पाश्चात्यद्रव्यशास्त्रीयगणिते**—Physical Mathematics नामक-ग्रन्थभागे ।

(५) **तयाकृष्टम्**—तथा चोक्तम् "आकृष्टशक्तिश्च मही तया यत् स्वस्थं गुरु स्वाभिमुखं स्वशक्त्या । आकृष्यते तत्पततीव भाति......" (सिद्धान्तशिरोमणिः) इति ।

(६) **स्वशक्त्या**—भूम्याकर्षणशक्त्या ।

(७) **तेषाम्**—कुरुवर्षजनानाम् । कुरुवर्षो हि America इति नाम्ना प्रसिद्धो भूभागविशेषः ।

वेगाद्गच्छद्बाष्परथे स्थितो द्विगतिमान् जनः ।
आधारगतिमान्स्वीयशक्त्युत्थगतिमानिति ॥ १२ ॥
तथा मत्स्यजिघृक्षुश्च पक्षी द्विगतिरप्यसौ ।
आधारभूमिबद्धत्वात् भूमेःपश्चान्न गच्छति ॥ १३ ॥
भूमिः स्वपरितश्चन्द्रं दूरस्थमपि कर्षति ।
किन्नाकर्षति सा भूमिश्चिन्त्यतां सन्निधौ द्विजम् ॥ १४ ॥

**इति प्रथमो भागः**

## ॥ अथ द्वितीयो भागः ॥

किञ्च "भूर्भूमिरचलानन्ता धरा विश्वम्भरा स्थिरा" इति नैघण्टिकोक्ताचलादिपदार्थ विमर्शनेनापि उक्तार्थोऽवगम्यते । यथा:—भूमिर्नाम पञ्चमहाभूतान्तःपाती द्रव्यविशेषः न हि भूगोलमात्रम् । द्रव्यं पुनः "यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् । तद् द्रव्यम्" (च-सं-सू-अ-१) "क्रियाश्रयत्वे सति गुणाश्रयत्वं द्रव्यस्य लक्षणम्" (तर्कमतम्) इत्यादिवचनैः कर्मणां गुणानां चाश्रयम् । एतादृश भूमिपर्यायपदानि कर्मनिमित्तकानि कानिचित् गुणनिमित्तकानि च भवन्ति । तेषु 'अचला' इति पदं कर्मनिमित्तकम् । अत्र चलनं नाम प्रसरणम् । तद्विद्युति स्वभावसिद्धम् । तथाऽस्याः (भूमेः) प्रसरणं नास्तीति पदार्थः । किन्तु वातादिनोदिताः शाखाः शाखिनः सुस्थिरा अपि चलन्ति । तथेयं भूमिरपीति वक्तुं कः सन्देहः ? एतत् प्रथमं चलनम् । अथ काचिल्लतोषा नीरादिसिक्ता चेदपरेऽहनिद्व्यङ्गुलं त्र्यङ्गुलं वापि प्रसरेज्जडापि । एतादृशजडवस्तुचलनस्य (प्रसारस्य) चिच्छक्तिविशिष्टत्वात् चिज्जडव्यामिश्रत्वमुपपद्यते । एतद् द्वितीयं चलनम् पाषाणादिष्वपि दरीदृश्यते वङ्गाङ्गार-स्वर्ण-रौप्यादिखनिजोत्पत्तौ । अथ तृतीयं बुद्धिप्रधानम्—अत्र सत्वगुणोपपन्नान्तःकरणमनस्तत्त्व प्रतिरुद्धं सत् (तत्र प्रतिबिम्बितम्) चिदेव ज्ञानरूपेण भासते—यथा भूम्यादिरुद्धो रविरश्मिरातपरूपेण । अत्र निरो-

---

(१) बाष्परथः—आङ्ग्लभाषायां Train इति प्रसिद्धो रथविशेषः .

धकस्य सत्वगुणप्रधानत्वात् ज्ञानोत्पत्तिः। देवमनुष्यतिर्यगादिप्राणिषु तेषां ज्ञाने तरतमभावस्तु तन्निष्ठसत्त्वगुणतरतमभावमपेक्षते। एवं तमोगुणप्रधानजड-प्रपञ्चेऽपि (पाषाणादिष्वपि) चिद्वैचित्र्यं वेदितव्यम् चित्प्रकृतिकत्वात् सर्व-प्रपञ्चस्य। एवं बहुधा चलनानि। तेषु यद्यत्र युज्यते तत्र तद्वक्तव्यम्।

अथ 'अनन्त'पदार्थः—इदं गुणनिमित्तकं पदम्। अन्तः समाप्तिः यस्या न विद्यते साऽनन्ता। नैषोऽर्थोऽस्मन्निवासभूमेः यतोऽद्योदितरवेर-परेऽहनि पुनर्दर्शनात्। नैवमनन्तायास्सम्भवति। अतोऽस्मन्निवासभूमेरिदं पदं पर्यायवाचकं चेत्सापेक्षमिति वक्तव्यम्—अन्यथानुपपत्तेः। यदि महा-भूतवाचकम् अन्वर्थं भवत्येव अनन्तकोटिब्रह्माण्डानामपि पाञ्चभौतिकत्वात्, भूमेः पञ्चभूतान्तः पातित्वाच्च॥

अथ 'स्थिर' पदार्थः इदं कर्मनिमित्तकं पदम्। 'ष्ठा' गतिनिवृत्तौ इति धातोरुत्पन्नं स्थिरपदम्। "धोधूयमानास्तिष्ठन्ति प्रलये परमाणवः" इति स्मृत्युक्तदिशा प्रलयकालिकब्रह्माण्डे तावद्गतिमतां विकीर्णानां परमाणूनां गोलरचनायामेकत्रावस्थापकं यत्तत्पृथिव्येव पिण्डाण्डेऽपि च पिण्डरचनायाम्। तथा चोक्तं सुश्रुतशारीरे "पृथिवी संहन्ति आपः क्लेदयन्ति" इत्यादि। अतस्तादृशावस्थापकत्वरूपस्थिरीकरणकारणत्वेन पृथिव्याः स्थिरेति पर्यायपद-मुपपन्नम्। एवं च तत्रैव (सुश्रुते) शरीरगतभूतगुणा वर्णिताः स्थिरगन्धगुणो-ल्बणत्वं पृथिव्याः। अबादिचतुष्टयस्य तु क्रमेण रसरूपस्पर्शविविक्तताश्च। एवं कर्मोपलब्धं स्थिरत्वं भूमेः। एवमेतानि सर्वाण्यपि पर्यायपदानि महाभूत-भूमिवाचकान्येव। यतः दृश्यतां विश्वम्भरेति पर्यायपदव्युत्पत्तिः। विश्वं बिभर्ति इति ह्यत्र विश्वपदेन अनेककोटिब्रह्माण्डरूपप्रपञ्च एव ग्राह्यः। "विश्वस्य गोप्ता विश्वस्य भर्ता" इत्यादिपरमात्मवाचकशब्देषु तथा दर्शनात्। तथा च पराशरमाधवीये एवं पठ्यते। यथाः—"ब्रह्मविष्ण्वादिलयानन्तरं पञ्च-भूतादिलयः पठ्यते महदादिविशेषान्तं यदा संयाति संक्षयम्। प्राकृतः प्रति-

(१) वज्राङ्गार—Coal.

सर्गोऽयं प्रोच्यते कालचिन्तकैः ॥ संस्थितेष्वथदेवेषु (प्रलय गतेषु) ब्रह्मविष्णु-पिनाकिषु । गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥ तद्वारितत्त्वं सगुणं ग्रसते हव्यवाहनः । तेजस्तु गुणसंयुक्तं वायौ संयाति संक्षयम् ॥ आकाशे सगुणो वायुः प्रलयं याति विश्वभृत । भूतादौ च (तामसाहङ्कारे) तथाऽकाशो लीयते गुणसंयुतः ॥ इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् । वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ॥ त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् । महान्तमेभिस्सहितं प्रकृतिर्ग्रसते द्विज ॥ बादरायणस्सूत्रयामास—विपर्ययेण तु क्रमोऽत उपपद्यते च (२-३-१५) इति । अतोऽस्मात्सृष्टिक्रमाद्विपर्ययेण प्रलयक्रमोऽभ्युपगन्तव्यः । सृष्टिक्रमस्य तत्रत्येषु पूर्वसूत्रेषु विचारितत्वात् अतश्शब्देन परामर्शः उपपद्यते ह्ययं विपरीतक्रमः । उपादानकारणभूतायां मृद्यवस्थितायां कार्यस्य घटस्य विलीयमानत्वात् । यदि सृष्टिक्रम एव प्रलयस्याऽऽद्रियेत तर्ह्यवस्थिते घटे मृद्विनाशः प्राप्नुयात् । न त्वेवं क्वचिद्दृष्टम्-तस्मादुपपन्नो विपरीतक्रमः । तथा सति सृष्टौ परमात्माद्येतद्देहान्तस्य क्रमस्य वक्ष्यमाणत्वात् प्रलये तद्विपर्ययेण अस्मद्देहादिपरमात्मान्तः क्रमो युक्तः । प्राकृतप्रलये प्रकृत्यन्तः क्रमो वक्तव्य इति चेद्बाढमुच्यत एव ।"

(पराशरस्मृतिः आचारकाण्डः विंशतितमश्लोकव्याख्या) इति ।

नैतादृशं प्रकृतिप्रलयोपदिष्टं विश्वम् अस्मदावासभूमिर्बिभर्तीति वक्तुमुपपद्यते ब्रह्माण्डापेक्षया अस्या अतिक्षुद्रत्वात् । किन्तु सालग्रामे विष्णुबुद्धिरिवास्यामुपचर्यते अयं विश्वम्भरेति पर्यायः । नैतादृगर्थमूरीकृत्य वस्तुतत्त्वनिर्णयः कर्तव्यः । अतः श्रीमदप्पैय्यदीक्षितनिरूपित "आकाशे पृथिवी प्रतिष्ठिता" इत्यादिस्थलेषु महाभूतभूमिरेव ग्राह्या पृथिवीपदेन—नास्मदावासभूतक्षुद्रभूगोलः । अपि तु "आयङ्गौः पृश्निरक्रमीत्" (तै-सं-१ का-५ प्र) इति श्रुत्यायं सूर्यगोलं परितो भ्रमतीति गम्यते ।

किञ्च तेन सूर्येण स्वाकर्षणशक्तिरूपमयूखैर्धार्यत इति श्रूयते । "दाधर्थपृथिवीमभितो मयूखैः" इति "मित्रो दाधार पृथिवीम्" इति च

सूर्यसिद्धान्ते च "मध्येसमन्ताद्‌ण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥" इति। नात्र तिष्ठतीति पदं गति-निवृत्तिवाचकम् किन्तु अवस्थितिमात्रबोधकम्। ब्रह्मण इति पद सूर्यपरम् एतद्‌भूगोलापेक्षया तस्य (सूर्यस्य) दशलक्षगुणाधिकत्वेन 'बृहत्वाद्‌ब्रह्म गीयते' इति ब्रह्मपदव्युत्पत्या च। एतेन अस्मदावासभूगोलं परितः न हि भ्रमति सूर्यः। न हि स्वधृतवस्तु परितः स्वयं भ्रमितुं शक्यम्—स्वकरधृतघटं परितः मनुष्य इव। अत्र घटमनुष्य दृष्टान्ते मनुष्यः स्वकरधृतघटं परितः न भ्रमितुं शक्तः। किन्तु शक्तः पाशबद्धघटं पाशे गृहीत्वा स्वपरितो भ्रामयितुम्। इममेवार्थं बोधयति श्रुतिः "दाधर्थपृथिवीमभितो मयूखैः" इति। एतेन "आसत्येन रजसा वर्तमानो निवेशयन् अमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन्।" इति श्रुतिस्तु सविता (सूर्यः) स्वाकर्षकं प्रद्युम्नं भ्रमन्-भुवना विपश्यन् भुवनानि पश्यन् इत्यर्थसंपत्तौ भुवनबाहुल्य-दर्शनात्-अस्मदावासभूगोलसदृशाङ्गारकाद्यनेकभुवनानि अस्मिन् ब्रह्माण्डे वर्तमानानि पश्यन् इत्यर्थं व्यनक्ति सूर्यस्याप्यस्ति स्वाकर्षकं प्रति परितो भ्रम-णम् इति च वेदितव्यम्।

किञ्च अयं परिदृश्यमान सूर्यः अस्मदावासभूगोलापेक्षया दशलक्षाधिक-परिमाणवानिति गणितविदां मतम्-तादृश बृहत्सूर्यगोलः ईदृगल्पभूगोलं परितः भ्रमतीति न युज्यते वक्तुम् आकृष्याकर्षकयोः सर्वत्राकर्षकस्यैव प्रभुत्वदर्शनात्। एतेन सूर्य आकर्षकः अस्मदावासभूगोलस्त्वाकृष्य इति सिद्धम्। अतः श्रीम-दप्पैय्यदीक्षितोक्त स्थिरत्वं महाभूतभूमेरेव नास्मदावासभूमेरिति।

आर्यभट्टोक्तभूभ्रमणं पुनः अस्मदावास भूमेरेवेति चेत्युपपद्यते एतावता विमर्शनेन। एवमन्योन्यविरुद्धवद्‌वभासमानानां श्रुतीनां स्मृतीनां च रहस्यं वेदितव्यम्। सुनिशितबुद्धिना नान्यदूषणं कार्यम्। अत्र गणितविन्मतं निरूप्यते विद्वत्प्रमोदाय। यथा अस्मदाव सभूगोलस्य व्यासार्धं पञ्चशतयोज-नानि। सूर्यबिम्बस्य तु पञ्चाशत्सहस्रयोजनानि। "त्रिज्याघ्नघ्नाः खखनाग-

नागाः भूनेत्रभक्तास्तु फलं घनस्य (गोलस्य)" इति गणितनियमानुसारेण भूरविगोलयोः घनफले साधयित्वा तयोरन्तरं वेदितव्यम्। तद्यथाः—भूत्रिज्या (800) योजनानि तद्धनम् (125000000) योजनानि—एतानि नागनागैः (४४) गुणितानि, भूनेत्रैः (२१) भक्तानि च कार्याणि हि—अतोऽत्र गणितलाघवाय गुणकं भाजकेन भक्तं चेद्यल्लभ्यते चत्वारि तत्सामीप्यलब्धं विदित्वा तेन त्रिज्याघनं गुणितं चेत् पञ्चाशत्कोटियोजनपरिमितं भूगोलफलं भवति। एवमेव रविगोलस्यापि साधितं घनफलं पञ्चजलधि ($5 \times 10^{14}$) परिमितम्। एतद्भक्तं चेद्भूघनफलेन दशलक्षसङ्ख्या (1000000) लभ्यते। इयत्ताधिक्यमेतेन सूच्यते भूगोलापेक्षया रविगोलस्य इति वेदितव्यम्। एवं सर्वमनवद्यम्।

इति द्वितीयो भागः।

## अथ तृतीयो भागः (दृग्वादव्यवस्थासहितः)

"तत्रादावभ्युपगम्यवादः"

यद्वा पूर्वपक्षीयमतानुरोधेन यद्यङ्गीकुर्मोऽस्मदावासभूमिः स्थिरेति-तत्परितस्सर्वज्योतिश्चक्रं परिभ्रमतीति च; तदा आपतेयुरनुपपत्तयः। तद्विशिष्टवचनानि नाधिरोहन्ति प्रमाणकोटिम्। "अत्रोपपत्तिज्ञानेवाऽऽगमः प्रमाणम्" इति दृग्वाद प्रामाण्य प्रतिपादकवचनात्।

ननु शास्त्रैकशरण्येषु विषयेषु का कथा दृग्वादस्य इति चेत् सत्यम् "स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानश्चतुष्टयम्। एतैरादित्यमण्डलम्। सर्वैरेव विधास्यते।" (अरुणम् २ अनु) इति श्रुत्या प्रत्यक्षस्यापि (दृग्वादस्यापि) प्रामण्यापत्तेः तद्व्यवस्था क्रियते—उदितादि होमस्थल इव। तद्यथाः—विध्योर्बली परस्तावत् सनिमित्तानिमित्तयोः। सन्ध्याविधिरिवान्यस्य सहेतुत्वात् विकल्पता॥

(१) उदितादिहोमस्थल इवः—"उदिते जुहोति अनुदिते जुहोति" इति परस्परविरुद्ध श्रुत्योस्तुल्यबलत्वात् लङ्काभूमध्यरेखातः प्राक्प्रथमः पक्षः पश्चाद् द्वितीयः क्षमत इति यथा व्यवस्था कृता तथैवेत्यर्थः।

अस्यायमर्थः सनिमित्तानिमित्तयोः विध्योः परो विधिर्बलीयान् तस्यानिमित्तत्वात् "अहरहस्सन्ध्यामुपासीत" इति सन्ध्याविधिवत् । अत्र सन्ध्याफलस्य अनैन्द्रियकत्वात् तत्करणे हेत्वदर्शनमनैच्छिकत्वं च—अतोऽयं विधिर्बलीयान् । अन्यस्य इतरस्य । 'कारीरेष्ट्या वृष्टिकामो यजेत" इत्यादिविधेरित्यर्थः । सहेतुत्वात् वृष्टिकाम इत्यादिहेतुसद्भावात् । तादृशहेतोरिच्छाधीनत्वात् विकल्पता सिद्धेत्यर्थः । अतोऽयं विधिः पाक्षिको भवतीति भावः । एतेन यत्फलमैन्द्रियकं तत्रोपपत्तेरावश्यकत्वम् अन्यत्र नेति सिद्धान्तः । एतयोः केवलशास्त्रैक प्रामाण्यविषयोदाहरणम्—यथा पञ्चघटिका प्रमाणा यस्मिन् दिने प्रतिपत्तस्मिन् दिने "यां तिथिं समनुप्राप्य उदयं याति भास्करः" इत्यादिना तद्दिवसीय सायमग्निहोत्रादिकं नित्यकृत्यं सर्वमपि—तदा सायं प्रतिपदभावेऽपि (द्वितीयासद्भावेऽपि) प्रतिपत्सङ्कल्पेनैव कार्यम् ।

यद्यापतेन्नैमित्तिकम् (प्रत्याब्दिकादिकम्) तस्य तावद्द्वितीयासङ्कल्प इति केवलशास्त्रनियमः । नात्रोपपत्तेरधिकारः केवलं शास्त्रस्याधिकृतत्वात् । किन्तु "दृक्कर्मादाविदं स्मृतम्" (सूर्यसिद्धान्तः) इत्यादिना यत्र दृक्प्रसक्तिस्तत्रोपपत्तेरधिकारः । अत्र केषाञ्चिदभिसन्धिः—तिथ्यादीनामपि साध्यते दृक्सिद्धता ग्रहणादीनामिव छायाद्युपकरणालम्बनेनेति तथा चेदस्तु नाम-तादृशदृक्सिद्धता तिथ्यादीनाम् । किन्तु तत्रोपयुज्यते अनैन्द्रियकफलप्रतिपादकधर्मवचनेषु यतः "मान्दं कर्मैकमर्केन्द्वोः" इति तिथ्यादिसाधने "दृक्कर्मादाविदं स्मृतम्" इति ग्रहणादिसाधने च सौरतन्त्रे दृगदृक्कर्मणोर्विभज्योक्तत्वात् । अत्र तिथ्यादयः केवलादृष्टस्वर्गादिफलकाः, ग्रहणादयस्तु स्पर्शमोक्षशृङ्गोन्नत्यादिदर्शनरूपप्रत्यक्षफलका इति सिद्धान्तः । "दृक्कर्मादाविदं स्मृतम्" इत्यत्र दृक्पददर्शनादिति वेदितव्यं विद्वद्भिः ।

नन्वत्र भवता तिथ्यादिदृक्सिद्धता निराकृतेति यत्तदसत् । यतः "ध्यानग्रहोपदेशाद्बीजं ज्ञात्वा सुदैवज्ञैः । तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ ॥" इति ब्रह्मसिद्धान्तोक्तेरिति चेन्नायं दोषः—तत्रोपदिष्टग्रहा ब्रह्मध्यान-

कालिका इति 'ध्यानग्रहोपदेशात्' इति पदं व्यनक्ति। ब्रह्मणो ध्यानकालः सृष्ट्यादिः। तदाद्यद्यावधि अतिदीर्घकालः ($197 \times 10^7$- एतद्वत्सरपरिमित-कालो) व्यतीतः। अतस्तदुक्तग्रहाणां बीजसंस्कारो (दृक्कर्म) अङ्गीकृतः। न तथा सौरे अत्र तु युगीयग्रहोपदेशात्। तथा चोक्तम्—"युगे युगे महर्षीणां स्वयमेव विवस्वता" (सूर्यसिद्धान्तः) इति। अत्र 'युगे युगे' इति वीप्सैवो-पदिशति ग्रहाणां युगीयत्वम्। किञ्च "युगानां परिवर्तेन कालभेदोऽत्र केवलम्" इति वचनेन ब्रह्मसिद्धान्तोक्तबीजसंस्कारसंस्कृतग्रहा एवात्रोपदिष्टा इति भावो व्यज्यते। अतस्सौरोक्तग्रहेषु तिथ्यादिसाधनविषये न बीजसंस्का-रावसरः (न दृक्कर्मावसरः)।

ननु महायुगस्यापि विंशतिसहस्रोत्तरत्रिचत्वारिंशल्लक्ष (4320000) वत्सरात्मकत्वात् अस्त्येव कालदैर्घ्यम्। अतस्तदुक्तानामपि बीजावसरः खेटा-नामिति चेन्न-धर्मस्य नियतितत्त्वावरुद्धत्वात्। नियतितत्त्वस्य शास्त्रान्तर (मन्त्रशास्त्र) प्रसिद्धत्वाच्च। नियतितत्त्वं नाम इयत्तावच्छिन्नकालादिषु इयत्प्र-माणकार्यादीनि कर्तव्यानीत्यादिनियमः। यथाः—एकस्मिन् दिने कर्तव्यानां सन्ध्याग्निहोत्रादीनां सङ्कल्पे ग्राह्यौदयिकी तिथिरेवाल्पापि इत्यादिः। एवं युगादिग्रहा एव ग्राह्या आयुगमिति "युगे युगे" इति वीप्सयोपदिष्टत्वात् सौरतन्त्रेण। अतस्तदुक्तग्रहाणां न हि बीजावसरः।

ननु दैवज्ञसार्वभौमपदलाञ्छितैः नृसिंहमहाग्निचिद्भिः प्रणीतायां तिथि-कल्पवल्ल्यां तावत्तिथ्यादिष्वपि अपराह्णव्याप्त्यादिसन्देहे "विलक्षणात्क्षीणतया क्षणे क्षणे क्षपाकरस्य स्फुटभुक्तिरस्मात्। तत्कालजार्केन्दुवशात्स्फुटत्वं तिथ्या-दिकानामसकृद्विधेयम्।" इति सौरानुपदिष्टमप्यसकृत्करणमुपदिष्टम्। एत-देव बीजप्रति तयोः (असकृत्करणबीजयोः) तुल्यफलत्वादिति चेन्न—तुल्यत्वेऽपि बीजस्योक्तसंस्कारात्पार्थक्यसिद्धेः शास्त्रानुक्तत्वदोष-प्रसङ्गादनुपादेयत्वं सम्भ-वति। न तथाऽसकृत्करणे तस्य शास्त्रोक्तसंस्कार एव गणितसौक्ष्म्यापाद-कत्वमात्रहेतोर्नानुपादेयत्वम्। गणितसौक्ष्म्यं नाम उक्तविधेरेव फलसाधने

स्पष्टतरत्वम् । एतस्यैव फलस्य साधने सन्तु बहुविधा गणितमार्गाः । यथा रूप्यत्रयस्य नवांशः किमिति प्रश्ने भिन्नगणितपद्धतौ $\frac{3}{9} = 1 \times \frac{3}{9} = \frac{1}{3}$ इति दर्शयति । दशांशगणितपद्धतौ पुनः एवं दर्शयति । 9) 3· (0·33· एतयोर्भिन्नगणितपद्धतिरेव स्पष्टतरा निश्शेषत्वात् । इतरा 3 0 तु सशेषत्वात् स्थूला । एवं सौक्ष्म्यापादने प्रवृत्ताः 2·7 असकृत्करण कर्णानुपातादयो मार्गाः । ततो न ते 30 सौरविरुद्धाः । अतः कर्णानुपातोपलब्धमन्दफलसंस्कृतरविचन्द्रसाधिततिथ्यादिमत्तिथिकल्पवल्ल्यामसकृत्करणेन तात्कालिकतिथ्यादिसाधनोपदेशो न दोषाय कल्पते ह्युक्तदिशा तस्य सौराविरुद्धत्वात् ॥

किञ्च "कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥" (विष्णुधर्मोक्तिः निर्णयसिन्धुः–१४-पु) इति स्मृत्या नित्यकर्मसु यथौदयिकी तिथिर्नाम सूर्योदयकालिकरविचन्द्रसाधिता तथाऽऽपराह्णिक्यपि तत्कालिकरविचन्द्रसाध्या भवेदेव प्रत्याब्दिकादिषु ।

अपि च "यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गम् नोज्झितोपक्रमेण तु ।" (बोधायनः निर्णयसिन्धुः–१४-पु) इति ।

एतच्च—"हरिः कुमारो विघ्नेशपितृदुर्गाः यथाक्रमम्" प्रातः सङ्गवमध्याह्नापराह्णसायाह्नेषु पूज्या इत्युक्तत्वात् तत्तत्कर्मोचिततिथेस्तत्तत्कालिकरविचन्द्रसाध्यत्वं निर्णीतं भवति । इममेवार्थं प्रबोधयति तिथिकल्पवल्लीश्लोकः विलक्षणात्क्षीणतया.........इत्यादिः । एतावता नित्यकर्मणां यथौदयिकीत्वमात्रं प्रधानं तथेतरेषामपि (प्रत्याब्दिकादीनामपि) आपराह्णिकीत्वादीति सिद्धत्वात् चन्द्रगतेः प्रतिक्षणविलक्षणत्वाच्च तत्तत्कालिकरविचन्द्र साध्यत्वं तिथेरुपदिशत्ययं श्लोकः । अतो नैतत्तिथौ दृक्कर्मेति भ्रमितव्यम् । इति दृग्वादविमर्शः ।

इतः परं स्मृति प्रत्यक्षादिभिरनुपपत्तीः प्रदर्शयिष्यामः भूस्थिरवादे । यथाः—"भोदया भगणैस्स्वैस्स्वैरूनाः स्वस्वोदया युगे" इति सौरोक्तिः । अस्यायमर्थः—भोदयाः—भवासराः । स्वैस्स्वैर्भगणैः रविकुजगुर्वादीनां स्वस्वभगणैः

ऊनाः ऊनिताश्चेदवशिष्टाः । स्वस्वोदयाः रविकुजगुर्वादीनां स्वस्वोदयाः । युगे भवन्तीत्यन्वयः । यथा कुजभगणैरूनिताः भोदयाः कुजवासराः गुरुभगणैरूनिताश्चेद्गुरुवासरा भवन्ति तथा रविभगणैरूनिता रविवासरा भवेयुर्हि—ते तु न तथोक्ताः । किन्तु कहाः इति कुवासरा इत्यादिपदैर्निर्दिष्टाः । एतेन रविभगणा नाम भूभगणा (भूभ्रमणजनितभगणा) इत्यर्थः सम्भवति । अतस्सिद्धं भूमेरेव भ्रमणं न तु रवेः ।

ननु रविभगणा भूभ्रमणसिद्धाश्चेद्भूभगणा इत्येवोक्ता भवेयुः न तथोक्तत्वात् रविपदनिर्देशाच्च ते रविभ्रमणानुजाता एवेति चेन्न ; आकृष्याकर्षकयोर्यस्मिन् कस्मिंश्चिद् द्रष्टा स्थितश्चेद्गणिते न हि फलभेदः । अतो रविभूपदयोः विनिमयः भगणोपदेशे । वासरोपदेशे पुनः यो यद्ग्रहोदयद्वयान्तरकालः स तद्ग्रहवासरस्स्यादिति हेतोरत्र कुवासरकहादिपदप्रयोगस्तावत् सौरतन्त्रे भूस्थिरवादानुपपत्तिं दर्शयत्युक्तदिशा । एवं स्मृत्यनुपपत्तिः ।

अथ प्रत्यक्षानुपपत्तिः । यथाः—खे खेटास्तावत्प्रचलन्ति कस्मिन् मार्गे—वृत्त[1] दीर्घवृत्त[2]-अन्तरायामखण्डवृत्त[3]—बहिरायामखण्डवृत्त[4] सरलरेखाख्येषु पञ्चसु मार्गेषु ? इत्याकाङ्क्षानिवर्त्योऽयमुपन्यासः । उक्तमार्गपञ्चके अन्त्यत्रितयस्य आद्यन्ताभावात् तत्र सञ्चरतां धूमकेत्वादीनां[5] नियतकालिक पुनर्दर्शनाभावस्सम्पद्यते, तथा नेतरेषां कुजादीनाम् । अथावशिष्टयोर्वृत्तदीर्घवृत्तयोराद्यन्तवतोरेकस्मिन्नेव मार्गे ख्यादयः (भूम्यादयः) परिभ्रमन्तीति वक्तव्यम् यतस्तेषां पौनःपुन्येन नियतकालिकदर्शनात् । तत्रापि यदि चरति खेटः समवृत्ते तत्खेटस्य नीचोच्चाभावस्सम्भवति तद्वृत्तस्य समत्रिज्याकत्वात् । न तथा दृश्यते खेटस्य नीचोच्चदर्शनात् । अतस्सर्वे खेटा दीर्घवृत्त

---

(१) **वृत्त**—circle.

(२) **दीर्घवृत्त**—elipse.

(३) **अन्तरायाम-खण्डवृत्त**— hyper-bola.

(४) **बहिरायामखण्डवृत्त**—pora-bola.

(५) **धूमकेतुः**—comet.

एव चरन्तीत्युक्तोपपत्त्या सिद्ध्यति। तद्वृत्तस्य असमानत्रिज्याकत्वात् तत्र भ्रममाणस्योपपद्येते नीचोच्चे खेटस्य। नैतावदेव, यत्किञ्चिद्गतिमतोऽपि वस्तुनः (जगतः) नीचोच्चभावोऽवश्यंभावीति श्रूयते:—"त्रिनाभिचक्रमजरमनर्वम्। येनेमा विश्वा भुवनानि तस्थुः" (चित्ती) इति। अत्र त्रिनाभिचक्रन्नाम दीर्घवृत्तम् तस्य केन्द्रत्रयसद्भावात्। तस्थुः प्रतस्थुः। प्रयान्तीति भावः तथा चाद्यतनकालिकाणुशक्ति[1] विमर्शनेऽपि स्फुटीभवति वस्तुनः दीर्घवृत्तभ्रमणम्। केन्द्रस्थितस्य (मध्यस्थितस्य) कर्षकवस्तुनः[2] परितो भ्रमति कृष्यवस्तु[3] इति निरूपणात्। एवं भ्रममाणानां खस्थपदार्थानां मध्ये "मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्तात्" इति मन्दादिखेटाः "पौष्णान्ते भगणस्स्मृतः" (सू० सि) इति भगणस्मरणात् अश्विन्यादिनक्षत्राणि च गृहीताः सौरे। अत्र मन्दादिखेटाः परिभ्रमन्तीत्युक्त्या भुवं परितो भ्रमन्तीत्यर्थोऽवगम्यते। तत्र सूर्यपददर्शनात् रविरपि भुवं परितो भ्रमति इति च।

अत्रानुपपत्तिः। यथाः—मन्दकक्षामारभ्य चतुर्थकक्षास्थितरवेः केन्द्रभूतभूमेश्च मध्ये शुक्रबुधौ स्मारितौ हि। तदा तयोः (शुक्रबुधयोः) अन्यतरस्य वा रवितः कदाचिदपि षड्भान्तरावस्थितिः सम्भवेदवश्यं कुजादीनामिव। न तथा दृश्यते कदापि। इयमेकानुपपत्तिः। अतः केन्द्रे तावत्सूर्योऽस्तीति तं परितः बुधशुक्रौ भ्रमत इति अवश्यं वक्तव्यम्। तदा भूमिः सूर्यसंज्ञिका सती मन्दादारभ्य चतुर्थकक्षायामवस्थिता केन्द्रस्थितरविं परितो भ्रमतीत्यनुक्त्वा न पार्यते। एतेन मन्दादिसर्वे ग्रहाः भूम्या सह रविं परितो भ्रमन्तीति सिद्धम् रविणैते धारिता इति च। तथा च श्रूयतेः—"मित्रो दाधार पृथिवीमुत द्याम्" इति। अस्यायमर्थः—मित्रः—रविः। पृथिवीम्—भूमिम्।

---

(१) **अणुशक्तिः**—electronic power.
(२) **कर्षकवस्तुनः**—proton संज्ञकस्य कर्षकस्य
(३) **कृष्यवस्तु**—electron संज्ञकवस्तु

दाधार—धारितवान्। "दाधर्थपृथिवीमभितो मयूखैः" इति श्रुतिरपि इममर्थं द्रढयति। उत द्यां च-द्युलोकं कुजादिग्रहगणं च दाधारेत्यन्वयः।

किञ्च "आयङ्गौः पृश्निरक्रमीत्। असदन् मातरं पुरः। पितरं च प्रयन् सुवः" इति श्रुतिरपि भूभ्रमणं प्रतिपादयति। इयमङ्कुरारोपणसमये भूम्यभिमन्त्रणे विनियुज्यते। अस्यायमर्थः-गौः-ग्मा-ज्मा-क्ष्मा इति भूपर्यायाः इति यास्कवचनात्। अयं गौः भूगोलः। 'गौः' पदस्य भूगोलवाचकत्वात् अयमिति पुल्लिङ्गनिर्देशः। पृश्निः प्राप्तवर्णः प्राप्ततेजाः साकं जानामीत्यत्र मन्त्रोक्ताः मुख्यरश्मिविशेषाः सप्त मिश्रं त्वेकम्। मातरम् स्वोपादानकारणम्। पितरम् स्वपरिपालकम्। असदत्-आश्रितवान्। सुवः-तादृशसूर्यम्। पुरः प्रयन्-प्रागच्छन्। आ अक्रमीत् परितो भ्रमतीति भावः। अनया श्रुत्या भूमिः रविं परितो भ्रमन्ती आत्मप्रदक्षिणान्यपि करोतीति स्पष्टतरोऽर्थोऽवगम्यते। एतेन भूमिरेव भ्रमति न सूर्यः, भूमिः न स्थिरेति च सिद्धान्तो घण्टापथः।

अपि च; यदि भूमिमेव परिभ्रमन्ति खेटाः रविवत्सर्वे केवलं मन्दफलसंस्कारेणैव स्फुटा भवेयुः। न तथा कुजादयः तेषां शीघ्रफलसंस्कारस्याप्यावश्यकत्वात्। अथ मन्दफलं नाम इदम्—ग्रहमध्यस्फुटान्तरम्। तत्स्वरूपं किञ्चिदिव निरूप्यते। यथा:—दीर्घवृत्तस्यास्ति केन्द्रत्रयम्। तत्र भ्रममाणः खेटः तद्दिनमध्यगत्या साध्यते। सोऽयं केन्द्रत्रयमध्यवर्तिमध्यकेन्द्रदृष्ट्या स्पष्ट एव भवेत्। किन्तु द्रष्टा तावत् आकृष्याकर्षकयोरन्यतरस्मिन् वर्तमानः पश्यति खेटम्। आकर्षकः पुनः न मध्यकेन्द्रे तिष्ठति। तिष्ठति तु तत्पार्श्वकेन्द्रयोरन्यतरस्मिन्। तयोरन्तरं केन्द्रच्युतिसंज्ञितं स्यात्, आकर्षक केन्द्राऽऽकृष्यखेटान्तरं मन्दकर्णसंज्ञकं च। ताभ्यां संसाधितं मन्दफलं भवति "न हि नीचोच्चयोर्मान्द्यं मध्यकर्षककेन्द्रयोः। सूत्रैक्यात्परमं मध्ये फलं शैघ्र्यं च तत्तथा॥" इत्युक्तदिशा। तत्तावत् षड्भान्तचक्रान्तयोः शून्यं स्यात् तत्र कक्षीय दृङ्मध्यकेन्द्रयोः (कर्षक मध्यकेन्द्रयोः) समसूत्रावस्थितेः। त्रिभान्तनवभान्तयोस्तावत् परमं स्यात्तन्मन्दफलम् तत्र केन्द्रच्युतिरूप अन्तरस्य परमावधित्वात्। एतत्फलमाकृष्याकर्षकयोः यत्र कुत्रस्थेनापि समानमेव द्रष्ट्रा दृश्यते। अतो

मन्दाच्चतुर्थी कक्षा भौमापि सौरीति वर्णिता सौरे। भ्रममाणपदार्थेषु यत्र कुत्रावस्थितोऽपि द्रष्टा मनुते स्वाधारं स्थिरमिति शेषा भ्रमन्तीति च। एतन्निसर्गसिद्धम्। तद्वशादुक्तमस्मदावासभूमेः केन्द्रीकरणं सौरे "अद्भ्यो वा एष प्रातरुदेति अपः सायं प्रविशति" इतिवत्।

अथोच्यते स्वरूपं शीघ्रफलस्य:—यद्यस्ति द्रष्टा अन्यत्राकृष्याकर्षकाभ्यां, तदा शीघ्रफलापत्तिः तत्कुजादीनामेव सम्भवति भूस्थदृष्ट्या तेषामाकृष्याकर्षककोटिबहिर्भूतत्वात्। तत्र प्रथमं मध्यग्रहेषु कृते मन्दफलसंस्कारे सूर्यस्थदृष्ट्या स्फुटा भवेयुः कुजादयः। किन्तु सूर्यादन्यत्र भूमौ स्थितत्वाद्द्रष्टुः तन्मन्दस्फुटग्रहं मध्यग्रहमिव कल्पयित्वा केन्द्रच्युतिस्थानीयरविभूम्यन्तरशीघ्रकर्णाभ्यां मन्दफलवत्साधितं फलं शीघ्रफलं भवति। शीघ्रकर्णं नाम कुजादिमन्दस्पष्टग्रहभूम्योरन्तरम्। एतेन सूर्यमेव परितो भ्रमन्ति कुजादय इति सिद्धम्। तादृशो रविर्यदि भूमिं प्रदक्षिणीकुर्यात् तदा रविभूम्योर्मध्यगा भवेयुरेवावश्यं कुजादयः भूप्रदक्षिणकर्ता चन्द्र इव। न तथा कुजादयः कदाप्यागच्छन्ति रविभूमिमध्यम्। इयमेका प्रत्यक्षानुपपत्तिः। अतो न प्रदक्षिणीकरोति भूमिं रविरिति सिद्धम्। तथा परिदृश्यमानदैनन्दिनभ्रमणं वा रविसंक्रान्तिरूपवार्षिकगतिर्वा कस्येत्याकाङ्क्षायामेतद्भ्रमणद्वयमपि भूमेरेवेत्यनुमानेनानुक्त्वा न पार्यते लघुवस्तु बृहन्तं स्वपरितः भ्रामयितुमसमर्थमिति हेतोः। भूमेः सूर्यो दशलक्षाधिकप्रमाण इत्याद्यनुपपत्तयः पूर्वमेव प्रदर्शिता द्वितीयभागे। ताभिरपि भूमिस्थिरता निराक्रियते।

अपि च

> ध्रुवस्य ध्रुवसंज्ञा तु निश्चलत्वं व्यनक्ति हि।
> षाण्मासिकी गतिस्तस्याप्यल्पा भूभ्रमजैव सा॥
> द्रष्टा स्वाश्रयगत्यैव स्वाश्रयेतरवस्तुनः।
> स्थिरस्यापि गतिं पश्येच्चलद्धाप्परथस्थवत्॥

---

(१) षाण्मासिकी गतिः—प्रतिषण्मासकालपरीक्षणेन दृश्यमाना गतिः—इतोऽतो भ्रमणरूपा डोलागतिरिव।

(२) अल्पा—क्षुद्रा-अष्टादशविकलात्मिका।

षण्मासैर्भूः स्वकक्षायां व्यासमूलामगा ततः ।
तदग्रयोर्वेधितस्य ध्रुवस्येयं गतिः[1]स्फुटा ॥
वक्रस्तम्भोपपत्तिश्च[2] कुजादीनामिमं[3] वदेत् ।
एतेनाप्यस्थिरा भूमिरिति शास्त्रार्थडिण्डिमः ॥ (इति प्रत्यक्षम्)

किञ्च पाश्चात्यविद्वद्देतिह्यमपि उक्तार्थमनुकरोति । एतेन भूमिस्थिरतावादो निराकृतः । किन्त्वप्पैय्यदीक्षितोक्तभूस्थिरवादसामञ्जस्यमुक्तपूर्वमेव प्रथमभागे । इति सर्वमनवद्यम् ।

इति श्रीपरमहंसपरिव्राजकाचार्यैत्याद्यन्वर्थसकलविरुदावली-
विराजमानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरू-
पाक्षश्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
**विमर्शामृते भूभ्रमणनिरासमण्डनं नाम**
**तृतीयबिन्दुः**

---

(१) **स्फुटा = स्पष्टा** । पूर्वश्लोकोक्ताष्टादशविकलात्मिकेति भावः ।

(२) **वक्रस्तम्भोपपत्तिः**—कुजादिवक्रगतिः कुजस्तम्भनमित्यादीनामुपपत्तिः । गगने भ्रममाणस्य खेटस्य वक्रस्तम्भनादि न कदापि सम्भवति तत्तद्भगणोपदेशे तथानुपदिष्टत्वात् अपूरणभगणरूपेणापि "त्रिंशत्कृत्यो युगे भानां चक्रं प्राक् परिलम्बते" इत्ययनांशभगणोपदेशवत् ।

किञ्च "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिश्रुतेः ईश्वराज्ञाविरुद्धं न वक्रादिगतिमत्त्वं कदापि खेटस्य सम्भवति तद्गतेरीश्वराज्ञानियमितत्वात् । उक्तार्थ श्लोकभङ्ग्याह —सदा गतिमतो वक्रस्तम्भादिर्नैव जायते । ईश्वराज्ञाप्रवृत्तत्वात्तद्गतेः को विधारकः॥ दृश्यमानवक्रादि तु द्वयोर्गतिमतोः समागम एव । सम्भवति गतिसमीकरणसन्दर्भ इति वेदितव्यम् ।

(३) **इमम्**—पूर्वोक्तभूचलनाद्यर्थम् ।

श्रीः

# मनोवैभवविमर्शो नाम चतुर्थबिन्दुः

## प्रथमो भागः

यदुद्गतिलयास्तित्वैरुत्पत्तिलयवैभवाः ।
सृष्टेस्तन्मनसः को वा वैभवं वर्णितुं क्षमः ॥ १ ॥
प्रवृत्तिर्वा निवृत्तिर्वा सर्वे भावाश्च मानसाः ।
सर्वेऽमनस्के ते यान्ति विलयं हृदभावतः ॥ २ ॥
अमनस्कत्वमात्मज्ञ एवान्यत्र न विद्यते ।
अतो नात्मनि बन्धश्च सर्वशास्त्रेषु मानता ॥ ३ ॥
यतो मनोजनेः पश्चाच्छ्रूयते जीवतात्मनः ।
तदैक्षतेति श्रुत्या तज्जगदेतद्धि मानसम् ॥ ४ ॥

---

(१) **सर्वे भावाः**—चराचरादिसर्वे भावा इत्यर्थः । तथा चोक्तं गौडपादकारिकासु:—"मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम् । मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥" (अद्वैतप्रकरणम्-श्लो-३४) इति ।

(२) **बन्धश्च**—बन्धः संसारबद्धता । चकारेण मोक्षश्च नेत्यन्वयः। तथा चोक्तं गौडपादकारिकामु-"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति ।

(३) **मानता**—प्रमाणबुद्धिर्नेत्यन्वयः । तथा चोक्तं शङ्करभगवत्पूज्यपादैः "देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥" इति ब्रह्मसूत्रसमन्वयाधिकरणभाष्यचरमभागे आत्मज्ञानानन्तरम् शास्त्रमानता नास्तीति ।

(४) **श्रूयते**—वेदे श्रूयते । यथा:- "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै-उ) "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" (उ-छा) इत्यादिभिः सृष्ट्यनन्तरमेवात्मनो जीवभाव इति ।

(५) **जीवता** -जीवभावः ।

(६) **तदैक्षत**—"तदैक्षत बहु स्यां प्रजायेय" इति श्रुत्या ।

(७) **मानसम्**—[illegible] मनोविकारमिति वा ।

अस्मिन् सरोवरे जीवहंसाः कर्मप्लवैर्मुहुः ।
क्रीडन्तः [1]पिप्पलं स्वादु भुञ्जते [2]स्वेच्छयाऽ[3]त्रं च ॥ ५ ॥
एतेन मानसास्तित्वं नानुमेयं परात्मनि ।
तस्योपकरणापेक्षा न हि कार्यविधौ [4]श्रुतेः ॥ ६ ॥
अतो मनोऽपि द्विविधमाश्रयाद्ब्रह्मजीवयोः ।
यद्ब्रह्मनिष्ठं तत्तत्र जगत्कार्यतया स्फुटम् ॥ ७ ॥

किञ्च—

व्यक्तं मनःस्वतन्त्रं सज्जीवे स्वप्नं प्रकल्पते ।
तदेव कुरुतेऽव्यक्तं ब्रह्मणीदं (आत्मनीदं)[5]तथा जगत् ॥ ८ ॥
मायेति संज्ञितं चास्मादिदमव्यक्तसंज्ञितम् ।
अप्रतर्क्यमनिर्वाच्यं मोक्षसाधनहेतुकम् ॥ ९ ॥

---

(१) **पिप्पलम्**—कर्मफलम् । अस्य स्वादुत्वं प्रायश्चित्तेनेति ध्येयम् । "द्वा सुपर्णा........पिप्पलं स्वाद्वत्ति" (ऋग्वेदः) इति ।

(२) **स्वेच्छया**—जीवस्य स्वेच्छारूपकामेन । मनसैवेति भावः । मनसः कामः श्रद्धा इत्यादिपर्यायाः श्रूयन्ते "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिः ह्रीः धीः भीः इत्येतत्सर्वं मन एव" इति श्रुतेः (पराशरमाधवीय आचारकाण्ड २० श्लोकव्याख्यानं १८ पुट) इति । किञ्च परमात्मनोऽपि मननीशक्तिरस्मादेवोपपद्यत इत्युक्तं ज्ञानवासिष्ठे । यथाः—"स आत्मा सर्वगो राम नित्योदितमहावपुः । यन्मननान्मननीं शक्तिं धत्ते तन्मन उच्यते" (वेदान्तपञ्चदशी अद्वैतानन्दप्रकरणम् श्लोक २०) इति ।

(३) **अत्र च**—जीवकृत कर्म तत्पिप्पलविषये चेति भावः ।

(४) **श्रुतेः**—श्रुतिदर्शनादित्यर्थः । यथा "न तस्य कार्यं करणं च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥" (श्वे. उ. ६-८) "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" (श्वे. उ. ६-१९) इत्यादि श्रुतिदर्शनादिति भावः ।

(५) **तथा**—तत्प्रकारेण । 'यथा जीवे स्वप्नं कुरुते तथेत्यर्थः । तथा चोक्तम् ब्रह्मस्वप्नं जगदिति—"अद्वितीय ब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत्" (वेदान्तपञ्चदशी द्वै-दी-प्र-२४) इति ।

वाचारम्भणमात्रेण रूपं कामकलाह्वयम् ।
मन्त्रशास्त्रे पराशक्तिस्वरूपेति च वर्ण्यते ॥ १० ॥
अथ जीवाश्रयं चित्तवृत्तिरूपेण भासते ।
सैषाऽविद्या मनः श्रद्धादीत्यादिपदगोचरा ॥ ११ ॥
तया सङ्कल्पितं कर्म सकलं जीवकर्तृकम् ।
ब्रह्माभिन्नोऽपि जीवस्तु सगुणो यत्प्रभावतः ॥ १२ ॥
तद्वृत्तिरोधनं योग इति पातञ्जलोदितम् ।
कृष्णेन तु पुनः कर्मकौशलं योग उच्यते ॥ १३ ॥
हेतुकार्यानुबन्धित्वादिमे भिन्ने इव स्थिते ।
चित्तवृत्तिः कर्महेतुस्तत्फलं कार्यमीरितम् ॥ १४ ॥
तयोराद्यस्य रोधस्तु सुकुमारधियां हितः ।
द्वितीयस्येतरेषां तु गम्भीरमनसामलम् ॥ १५ ॥
यद्वा तयोरभेदः स्यादेकार्थत्वेन कर्मसु ।
फलकाङ्क्षारूपवृत्तिरोध एव हि कौशलम् ॥ १६ ॥
मनस्यनिर्मलेऽपूतः पूतस्स्यान्निर्मले पुमान् ।
शुभाशुभस्वरूपं तन्मानसं सर्वकर्मसु ॥ १७ ॥
यस्य शोकाकुलं चेतः सोऽशुचिः सर्वकर्मसु ।
तदभावे निर्मलत्वान्मनसः पूत एव हि ॥ १८ ॥

---

(१) **मन :**—मनः श्रद्धा-धी इत्यादिशब्दपर्यायवाचकमनःपदगोचरा अविद्या स्यादिति भावः । मनसः श्रद्धादिपर्यायवाचकत्वमुक्तपूर्वमेव ।

(२) **तद्वृत्तिरोधनम्**—चित्तवृत्तिनिरोध इत्यर्थः । तथा चोक्तम्—"योगश्चित्तवृत्तिनिरोधः" (पातञ्जलयोगसूत्रम् ) इति ।

(३) **कर्मकौशलम्**—कर्मकौशलं नाम फलानभिसन्धिपूर्वककर्माचरणम् । तथा चोक्तम्—"योगः कर्मसु कौशलम्" (भ-गी-२-५०) इति "सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते" (भ-गी-२-४८) इति च ।

(४) **वृत्ति :**—चित्तवृत्तिः ।

अतो विप्रे मृताशौचं दशरात्रं त्रिरात्रकम् ।
पण्डिते ; यतिवर्ये तु सुनगं नास्त्यमङ्गलम् ॥ १९ ॥

मनोविकारमेवैतत् सकलं साधुसंमतम् ।
मनसस्तोषणात्पुण्यं विपरीतमतोषणात् ॥ २० ॥

विकासतो यस्य जगद्विकासः
सङ्कोचतस्सङ्कुचतीव लोकः ।
यद्वृत्तिभेदादुभयोरविद्या
मायेति तन्मानसमेव सर्वम् ॥ २१ ॥

तन्मानसं काम इति प्रबोधः
श्रुतेरभूज्जीवगणस्य लोके ।
तत्सेवया बन्धनसाध्वसो न
स्यादेव तत्सर्वरसोदयश्च ॥ २२ ॥

क्वचित्प्रमादः क्वचिदप्रमादः
क्वचिच्छुचिः स्यादशुचिर्युवत्याम् ।
युधि क्वचिद्भीतिरभीः क्वचिच्च
मनोविकारः सकलोऽपि भावः ॥ २३ ॥

तन्मानसान्यत्किमपीह न स्यात्
प्रकाशते मानसचन्द्रबिम्बे ।
विमूर्च्छितं चिद्रविरश्मिजालं
तच्चन्द्रिकैवाखिललोकजालम् ॥ २४ ॥

---

(१) उभयोः—जीवब्रह्मणोः ।

(२) श्रुतेः—'कामः सङ्कल्पः—मन एव' इति श्रुतेः ।

(३) सर्वरसोदयः—सर्वरसाः शृङ्गारादिशान्तान्ताः नव रसा इत्यर्थः । यद्वा शृङ्गारदयः सर्वरसाः यस्मिन् लीयन्ते स शान्तरस इत्यर्थः ।

(४) मानसचन्द्रबिम्बेः—"चन्द्रमा मनसो जातः" इति श्रुत्या मनसश्चन्द्रसम्बन्धित्वमुपपद्यते—अतस्तदुपमानत्वम् ।

एवं द्विरूपं ननु दृश्यते तद्
ब्रह्मेति च श्रीगुरुकण्ठघोषः ।
कथं तदाऽद्वैतकथा तदीय[1]
श्रुतेर्गतिः कोपनिषद्रसः कः ॥ २५ ॥

यतस्सतोऽनन्यतया[2] स्वसत्ता-
ऽभावस्ततो दृश्यजगत्पृथङ् नो ।
यथा घटो नामविकारवेद्यो
मृदः पृथक्कर्तुमशक्य एव ॥ २६ ॥

अतस्तदद्वैतकथाप्रसारः
रसस्तथैकोपनिषत्प्रपञ्चे[3] ।
सत्यं जगल्लोकदृशैव[4] तावद्
घटो मृदीवात्मनि दृश्यमानम् ॥ २७ ॥

यद्दक्षिणार्थं गुरुणा[5] गृहीतं
तच्चित्तनाशाज्जनके तु मोक्षः ।
अतो मनोऽचिन्त्यविचित्ररूपं
नीरूपरूपद्वितयावभासम् ॥ २८ ॥

---

(१) **तदीयश्रुतेः**—"एकमेवाद्वितीयं ब्रह्म" इत्याद्यद्वैतप्रतिपादकश्रुतेः ।

(२ **अनन्यतया**:– "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र-सू २-१-१५) इति सूत्रोक्तारम्भणशब्दादिभिः ("वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा-उ-६-१४) इत्यादिश्रुत्युक्तारम्भणशब्दादिभिः) ब्रह्मानन्यता या सिद्धा जगतः तयेत्यर्थः ।

(३) **एकोपनिषत्प्रपञ्चे**—मुख्यतयोपदिष्टेशकेनाद्युपनिषत्प्रपञ्च इति भावः । एतेन "एकमेवाद्वितीयम्" इत्यादिश्रुतीनामपि गतिः सङ्गच्छते ।

(४) **लोकदृशा** :—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" (ब्र.सू.२-१-१४) इत्याद्युक्तदिशेत्यर्थः ।

(५) **गुरुणा** :—अष्टावक्रेण ।

सथात्मनीं कामकलेति शुद्धम्
जगत्यनन्ताकृतिविष्णुरूपम् ।
एवं विचित्राकृतिवैभवं त-
न्मनो विदित्वा सुकृती कृतार्थः ॥ २९ ॥

चोरे न्यस्तं वस्तु चौर्योपनीतं
न स्यादेवं लोकदृष्टं हि तद्वत् ।
माया मोक्षोपघ्निका सेव्यमाना
प्रत्यूहस्स्यान्मानिनश्चेन्मुमुक्षोः ॥ ३० ॥

प्राज्ञंमन्याः केचिदेतच्छरण्यं
हित्वा निन्दन्त्यस्य कार्यं जगच्च ।
यन्मूलं स्याद्ब्रह्मणोऽप्यात्मसृष्टेः
गायत्रीं तां ब्राह्मणास्संश्रयन्ते ॥ ३१ ॥

## इति प्रथमो भागः

---

(१) **आत्मनीम्**—आत्मनि ईम् । ईकारवाच्यं मन इत्यर्थः । "तां पद्मिनीमीं शरणमहं प्रपद्ये" (श्रीसूक्तम्) इति श्रुतिरपि इममर्थं व्यनक्ति । एषैव कामकलेति प्रसिद्धा मन्त्रशास्त्रे । अपि च "ईकाराय स्वाहा ईङ्कृताय स्वाहा" (तै-सं-७-का) इति देवतास्वरूपं वर्णितं श्रुतावीङ्कारस्य ।

(२) **मोक्षोपघ्निका**—मोक्षसहकारिणी । "हृदा मनीषा मनसाऽभिक्लृप्तः" (तै-उ) इति श्रुत्युक्ताभिक्लृप्तिजनकत्वेन मनोरूपमय्येव मोक्षोपघ्निका भवतीति भावः ।

(३) **मानिनश्चेत् मुमुक्षोः**—मानी चेत्तस्य "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इति श्रुत्या मायारूपं मनो ब्रह्मप्रतिपादनेऽसमर्थं प्रत्युत प्रत्यूहश्च भवति । अत्र नारदकथा तावद्दृष्टान्तो भवति ।

(४) **एतत्**—एतदुक्तपूर्वं मायारूपं मन इति भावः ।

(५) **आत्मसृष्टेः**—"तदात्मानं स्वयमकुरुत" इति श्रुत्युक्तात्मसृष्टेः ।

(६) **ब्राह्मणाः**—"ब्राह्मणो वै सर्वा देवताः । सर्वाभिरेवैनं देवताभिरुद्धरति । यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुत्युक्तलक्षणलक्षितब्राह्मणा इति भावः ।

## मायाविजयो नाम द्वितीयो भागः

पूर्वभागोक्त प्राज्ञंमन्याभिभाषणम् अत्र किञ्चिद्विवृणोति—

हास्यास्पदं स्यात्ते भ्रातः प्राज्ञंमन्याभिभाषणम् ।
नेदृशा वीरवादा स्युः फलदास्स्वेतरेष्वपि ॥ १ ॥

त्वत्पितुर्वास्ति चेत्तस्य पितुर्वा गर्हणा स्त्रियि ।
कुतस्ते जन्म ते वाचामीदृशानां तु का कथा ॥ २ ॥

त्वत्पितुस्स्मरणेनालं यत्तादृक्परमात्मनः ।
मायायां स्त्रीस्वरूपायां वृत्तिरव्याहताभवत् ॥ ३ ॥

तत एव प्रवृत्तेयमनन्ता सृष्टिरद्भुता ।
तत्र त्वमणुमात्रो हि कुतस्ते वीरवादता ॥ ४ ॥

चण्डालकन्यया रेमे वसिष्ठो भगवानृषिः ।
पराशरमुखाश्चान्ये महान्तः स्त्रीवशं गताः ॥ ५ ॥

शास्ताऽजनि महेशस्य मोहिनीरूपदर्शनात् ।
नाधिकस्त्वं महेशानात् गर्हणाकरणात्स्त्रियाः ॥ ६ ॥

यावन्मोहकरं यस्य तस्य तद्दर्शनावधि ।
विवेकिनी धीस्तादृक्त्वद्वेदान्तात्किं फलं स्थिरम् ॥ ७ ॥

तथोपिद्रूपिणी माया शरण्यं नान्यदा गतिः ।
सैषा पुरुषसूक्तेऽपि विष्णुरूपेण वर्णिता ॥ ८ ॥

---

(१) **स्वेतरेष्वपि**—स्वं च इतरे च, तेष्वपीत्यर्थः ।

(२) **वृत्तिः** प्रवृत्तिः । "तदैक्षत बहु स्यां प्रजायेयेति......" (छान्दोग्यम्) इति श्रुतिसिद्धा प्रवृत्तिः ।

(३) **यावन्मोहकरम्** तथा चोक्तम् "नयनपथमायाता यावन्न लोकविमोहिनी नयविदुदिताप्यास्ते तावद्विवेकवती मतिः । सकृदुपनतं तद्रूपं चेदनन्यगतं मनः कथमिव [illegible] धाता विधाय तथाविधाम् ॥" (हंसकिरणावलि—सन्निपद्धलम्) इति ।

इत्यनन्यगतिर्मायाशरण्यं सर्वदा भव ।
वेदान्तवीरवादांश्च त्यज मायाविगर्हणाम् ॥ ९ ॥

सर्वोपनिषदो ब्रह्म समीपं प्रापयन्ति हि ।
जीवं तदपरोक्षार्थे न क्षमास्सा पुनः क्षमा ॥ १० ॥

अतो जनार्दनान्मुक्तिं मायारूपाद्धि साधवः ।
काङ्क्षन्ति तत्पदं गच्छ त्यज नारीविगर्हणाम् ॥ ११ ॥

कदाचित्कालिदासाद्या योषिद्धर्मा अपि स्त्रियम् ।
गर्हयन्तीति यत्तत्र निर्जीवविषयोऽन्वयः ॥ १२ ॥

कङ्कादिपक्षिभोज्ये तु शवे कस्य रतिस्ततः ।
निन्दाभासश्च तदिदं ज्ञातास्वादादिना स्तुतेः ॥ १३ ॥

यद्वा :—

मलो भविष्यतीत्यन्नं को न भुङ्क्ते बुभुक्षितः ।
भाव्यचारुस्थितेस्तर्कात्कः पूर्वं चारु निन्दति ॥ १४ ॥

यदि निन्दति निन्द्यं तत्परब्रह्मापि ; तत्परे ।
जीवत्वे चारुता हेतुरतो निन्द्यं न कुत्रचित् ॥ १५ ॥

केशनिर्मितपट्टेऽन्नभक्षणे केशसंशयः ।
न स्याद्यदि स्यात्स्वतनोर्भवेदप्युपसंहृतिः ॥ १६ ॥

---

(१) **इति**—"पातय वा पाताले स्थापय वा सकललोकसाम्राज्ये । मातस्तव पदयुगलं नाहं मुञ्चामि नैव मुञ्चामि ॥"

(२) **मायारूपात्**—मायास्वरूपात् । विष्णोर्मायास्वरूपत्वं स्वयमेवोक्तं विष्णुना दक्षाध्वरध्वंसे वीरभद्राय । यथा:—"भोगे भवानीरूपा .... .... मदात्मिका ॥" इति ।

(३) **काङ्क्षन्ति**—याचन्ते । यथा—"आरोग्यं भास्करात् .. जनार्दनात्" इति ।

(४) **ज्ञातास्वादादिना**—"ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः" (मेघदूतम्)

उपाधेरुपसंहारे कुतःशिष्यः कुतो गुरुः।
न्यक्काकरत्वोपदेशः कुतो वा चिन्त्यताम् धिया ॥ १७ ॥
किञ्च देवहविर्यज्ञे नृदेहश्चाप्यचेतनः।
हविर्धियैव प्रेतोऽपि [1]लोकेऽस्मिन् दीयतेऽग्नये ॥ १८ ॥
क्षुद्रबुद्धिमतां बुद्धौ न्यङ्कृतिः प्रतिभासते।
तस्मान्नाद्रियते प्राज्ञैः प्रमाणं वा न सा भवेत् ॥ १९ ॥
तन्न निन्दन्ति यत्किञ्चिज्ज्ञानिनस्तत्त्वदर्शिनः।
मायाया ब्रह्मसत्तातोऽभिन्नसत्तात्वदर्शनात् ॥ २० ॥
कप्यासं[2] पुण्डरीकादिस्थले नीचोपमा मतिः।
न शङ्करस्य सञ्जाता तस्याद्वैतधनित्वतः[3] ॥ २१ ॥
कल्याणाद्यैः[4] कृता धीरैर्वस्तुनिन्दाः क्वचिद्यदि।
न हि निन्दान्यायबद्धा[5] सा स्तुतौ परिणम्यते ॥ २२ ॥
तात्पर्याभावतस्स्वार्थे शब्दानामत्र[6] तत्तथा।
"अपि वा मातरं गच्छेन्न गच्छेद्देवदारिकाम्[7] ॥" २३ ॥

(इत्यत्र मातृगमन निषेधेऽन्वेति न स्वतः)

---

(१) **लोकेऽस्मिन्**—भारतवर्षीयभरतखण्डभूभागे।

(२) **कप्यासम्**—कप्यासं पुण्डरीकमित्यादिस्थलं नाम छान्दोग्योपनिषदुक्तमिति वेदितव्यम्।

(३) **अद्वैतधनित्वतः**—अद्वैततत्त्वज्ञानमेव धनं यस्य तत्तादृशत्वतः।

(४) **कल्याणाद्यैः कृताः**—अस्मत्परमगुरुरूपकल्याणानन्दभारतीप्रमुखैः कल्याणश्रीकलादिग्रन्थेषु कृताः।

(५) **न हि निन्दान्यायबद्धा**—"न हि निन्द्यं निन्दितुं प्रवृत्तः किन्तु स्तुत्यं स्तोतुमेव" इत्यर्थसंबद्धो न्यायः। तत्संबन्धिनीत्यर्थः।

(६) **अत्र**—न हि निन्दान्याये।

(७) **अपि वा मातरम्......दारिकाम्**—अत्र मातृगमनाभ्यनुज्ञा तावत्सुप्रसिद्धदोषविशिष्टमातृगमनापेक्षयापि अधिकदोषदूषितं देवदारिकागमनमिति निरूपणद्वारा तन्निषेधार्थपर्यवसायिनी न पुनर्मातृगमनार्थं तस्य सुप्रसिद्धनिन्द्यत्वात्। अतस्तस्य (मातृगमनाभ्यनुज्ञार्थकवाक्यस्य) स्वार्थे तात्पर्याभावः, किन्तु परार्थे। **एवं देवदारिकागमननिषेधार्थ एव तात्पर्यम्।**

भावेतरन्नास्ति किमप्यसद्वा
सद्वा ततो भावमयप्रपञ्चः ।
मनोऽधिकारस्स तु भावबन्धः
स्वप्नोऽपि तन्मानसमेव माया ॥ २४ ॥

लोको भिन्नरुचिर्यस्मादस्तु वस्तुस्वनिष्ठता ।
न तेषां गर्हणा कार्या तावता धीमता श्रुतेः ॥ २५ ॥

शृङ्गारादिरसाः पूज्या देवीभावनया नव ।
नवस्वावरणेष्वत्र बीभत्सः पञ्चमो रसः ॥ २६ ॥

तस्मिन्नन्यदृशा तावद्भावना गर्हणास्पदा ।
पूजाविधौ तु सा यस्माद्भाव्यते पारमेश्वरी ॥ २७ ॥

किञ्च श्रीललितादेव्या नामसाहस्रमध्यगः ।
बीभत्सोऽपि रसत्वञ्च यस्मात्तच्चिन्त्यतां धिया ॥ २८ ॥

तस्मान्नास्त्येव कुत्रापि गर्हणा साधुसंमता ।
न निन्दान्यायबद्धेति चिन्त्यतां यत्र कुत्रचित् ॥ २९ ॥

मायामयमिदं सर्वं नामरूपात्मकं जगत् ।

---

(१) **श्रुते** :— " सर्वं खल्विदं ब्रह्म " इति श्रुतेः । सर्ववस्तूनां ब्रह्ममयत्वात्तेषां निन्दा न कार्येत्यन्वयः ।

(२) **नवस्वावरणेषु** :—श्रीचक्रगतनवावरणेष्वित्यर्थः ।

(३) **नामसाहस्रमध्यग** :—ललितासहस्रनामस्तुतिमध्यस्थितः ।

(४) **रसत्वञ्च**—रसभावमाप । चकारेण पूज्यत्वं चागमदित्यन्वयः । एतद्विस्तृतिरनुपदमेव तृतीयभागे द्रष्टव्या ।

(५) **न निन्दान्यायबद्धा**—न हि निन्दान्यायबद्धा ।

(६) **मायामयमिदम्** :—" मायामात्रमिदं द्वैतमद्वैतं परमार्थतः " इति गौडपादकारिकोक्तेः सर्वं मायामयमेवेत्यर्थः ।

तत्परं ब्रह्मरूपं तु मौनमेवेति[1] चिन्तय ॥ ३० ॥
रागमोहादयो[2] मायापाशास्सोपाधिबन्धने ।
सतीवियोगदुःखेन बद्धोऽभूदीश्वरःस्वयम् ॥ ३१ ॥
अहो मायास्वरूपस्य[3] मनसः प्राभवः क्व वा ।
क्षुद्रजीवगणोद्भूतं क्व वा वेदान्तगर्जनम् ॥ ३२ ॥

इति द्वितीयो भागः

## श्रीविद्यारससाम्राज्यं नाम तृतीयो भागः

### ( विवृतित्रयात्मकम् )

अथोक्तदिशा निराकृतेषु वेदान्तिवीरवादेषु द्वितीयभागे जीवस्य कथं मोक्षोपलब्धिरित्याशङ्कायामाह—

श्रीविद्यारससाम्राज्यं वदामोऽद्वैतसिद्धये ।
यत्कटाक्षं विना मोक्षो न तां नत्वाऽऽदिमातरम् ॥ १ ॥
गणनाथोऽहमेवातो जगन्मातुःपयस्तव ।
पीत्वा चोत्साहितस्तेन प्राकृतं किञ्चिदुच्यते ॥ २ ॥
बाले नीलालकावल्लसफाले [4]शेषाद्रिमध्यगा ।
वेङ्कटेश्वरनाम्ना त्वं भक्तानां कामधुग्भुवि ॥ ३ ॥
मज्ज्येष्ठभगिनी यस्मात्पूज्या त्वमपि मातृवत् ।
अधिकं वा यतो मातुर्हृदयासि नतोऽस्म्यतः ॥ ४ ॥

---

(१) मौनमेव:—"मौनव्याख्याप्रकटितपरब्रह्मतत्त्वम्" इति शङ्करोक्तेर्मौनप्रकटिततत्त्वस्याद्वितीयत्वात् तस्यैवेत्युक्तौ न कोऽपि दोषः ।

(२) रागमोहादय:—"कामः क्रोधश्च लोभश्च हर्षमोहमदा गुणाः । विषादश्चाष्टमः प्रोक्त इत्येते मानसा मलाः ॥" इत्युक्तमनोमलाः । तेषां पाशत्वं च "रागस्वरूपपाशाढ्या" (ललितासहस्रनाम) इत्यादिभिद्धम् ।

(३) मायास्वरूपस्य—मायाकृतेः । तथा चोक्तम्—"प्रगल्भा परमोदारा परामोदा मनोमयी" (ल-स-ना) इति ।

(४) शेषाद्रिमध्यगा—शेषाद्रिमध्यम् तिरुपतिक्षेत्रम् , तत्र स्थिता ।

आत्मा न दृश्यते कुत्राप्यस्ति सर्वत्र नित्यशः ।
सगुणद्वारतो ज्ञेयस्तदुपासनमीरितम् ॥ ५ ॥

मनोवाक्कायकरणैस्तत्त्रिधा परिकल्पितम् ।
जपस्तुतिसपर्याभिस्तदेवं क्रमशःस्मृतम् ॥ ६ ॥

यद्येतानि च योग्यानि साम्राज्यपदपालयः ।
श्वेतातपत्रं प्रथमं पालिश्शिष्टे च चामरे ॥ ७ ॥

**अस्यायं भावः**—एतत्त्रयस्य साम्राज्यचिह्नप्रतीकत्वेन यस्मै कस्मैचिन्न देयमिति । तथा चोक्तं तन्त्रान्तरे—"राज्यं देयं शिरो देयं न देया षोडशाक्षरी" इति । उक्तं च कालिदासेन—"जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् । अदेयमासीत्त्रयमेव भूपतेश्शशिप्रभं छत्रमुभे च चामरे ॥" (रघुवंश-३-१६) इति । एवमिति न कस्मैचिदपि दातव्यमिति न ; योग्यगुणविशिष्टाय दातव्यमेव । तथा चोक्तं तन्त्रान्तरे "दशवत्सरसेविने शिष्याय दातव्यम्—पुत्राय प्राणदायिने—राज्ञां राज्यप्रदाता यः" इति । तस्मात्सम्यग्गोप्येयमिति भावः ॥

श्रीविद्याश्रीस्तुतिः श्रीमच्चक्रार्चनमिति त्रिधा ।
तदङ्गानि च वीरेषु श्रूयन्ते कामधेनवः ॥ ८ ॥

त्रिष्वप्येतेषु सा देवी मूलप्रकृतिरूपिणी ।
शृङ्गारैकरसा ध्येया ज्ञेया नवरसात्मिका ॥ ९ ॥

(१) **सगुणद्वारतः**—"अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्" (क. उ. २-१०) इत्यादिना दृश्यमानसगुणवस्तुद्वारेणैवादृश्यब्रह्मणो ज्ञेयत्वात्तथोक्तम् ।

(२) **ज्ञेयः**—"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. आ. ४-५-६) इति श्रुत्या द्रष्टव्यत्वविधानादात्मनः स दर्शनीयः । अत्र दर्शनं नाम न चक्षुषा, किन्तु ज्ञानेन—अतो ज्ञेय इत्युक्तं भवति ।

(३) **तत्**—पूर्वश्लोकोक्तोपासनमित्यर्थः ।

(४) **तदेव**—मानसिकवाचिककायिकरूपेण परिकल्पितं यदुपासनं तदेवेत्यर्थः ।

'रसो वै स' इति श्रुत्या परमात्मा रसात्मकः ।
सोऽगोचरोऽपि शृङ्गाराद्यभिक्लृप्त्या सुगोचरः ॥ १० ॥
श्रीस्तुतिर्नाम ललितानामसाहस्रकं त्विह ।
सुज्ञेया सुलभा श्रेष्ठतयोक्ता चोच्यतेऽग्रतः ॥ ११ ॥

## इत्युपोद्घातः

## अथ श्रीस्तुत्यपरनाम ललितानामसहस्ररसप्रधानविवरणात्मिका प्रथमा विवृतिः

ललितानामसाहस्रस्तुतिः कल्पलता भुवि ।
इहामुत्रफला यस्माद्भक्तानां काममोक्षदा ॥ १२ ॥
नवावरणपूजायां देवीभावनया रसाः ।
नवापि भाविताश्चात्र ब्रह्मविद्यार्थपूर्वकम् ॥ १३ ॥
अत्राद्यन्तश्लोकयुग्मं ब्रूते ब्रह्म तथान्तरम् ।
नानारसोपसृष्टं च शृङ्गारादिरसाष्टकम् ॥ १४ ॥
उद्यद्भानुसहस्राभेत्यादि शृङ्गारबोधकम् ।
भण्डासुरवधोद्युक्तेत्यादि वीररसात्मकम् ॥ १५ ॥

---

(१) श्रुत्या—"रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तै-उ-) इति श्रुत्या ।

(२) शृङ्गाराद्यभिक्लृप्त्या—"प्रजातिरमृतमानन्द इत्युपस्थे । तत्प्रतिष्ठेत्युपासीत" इति श्रुत्या शृङ्गारस्य साधनत्वोपपत्तेः तदादिमानसव्यापारेणाभिक्लृप्तिर्या तयेत्यर्थः ।

(३) भावनया—"जपपूजाद्यशक्तश्चेत्पठेन्नामसहस्रकम् । साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ॥" (ल-स-ना-पू-पी-२३-२४) इत्युक्तेः, "मामर्चयतु वा मा वा विद्यां जपतु वा न वा । कीर्तयेन्नामसाहस्रम् इदं मत्प्रीतये सदा ॥" (ल-स-ना-पू-पी ४५-४६) इति श्रीपरमेश्वर्युक्तेश्च भावना, भावनया—नवेति भावः ।

(४) अत्र—अस्यां ललितासहस्रनामस्तुतौ ।

(५) ब्रह्मविद्यार्थपूर्वकम्—इयं स्तुतिः ब्रह्मविद्यत्यर्थज्ञानजननपूर्वकमिति भावः ।

(६) अन्तरम्—मध्यस्थमन्य भाग इत्यर्थः ।

हरनेत्राग्निसंदग्धेत्यादि कारुण्यमूनकम् ।
महारूपेत्यादि विश्वरूपत्वेन भयात्मकम् ॥ १६ ॥
ह्रींकारीत्यादि बीभत्सं ह्रीहेतोस्सूचयेदलम् ।
संहृताशेषपाषण्डेत्यादि रौद्ररसात्मकम् ॥ १७ ॥
मिथ्याजगदधिष्ठानेत्यादि हास्यं मृषामतेः ।
ब्रह्माणी ब्रह्मजननीत्याद्यद्भुतरसात्मकम् ॥ १८ ॥
बिन्दुतर्पणसन्तुष्टेत्यादि बिन्दुस्वभावजम् ।
शान्तं निरूपयेद्बिन्दुर्निर्गुणोऽसौ यतस्ततः ॥ १९ ॥
उपक्रमोपसंहारौ तुल्यार्थौ ब्रह्मबोधकौ ।
तदियं ब्रह्मविद्याऽभूच्छृङ्गाराद्यैश्च कामदा ॥ २० ॥
रसमध्यगतत्वेन बीभत्सोऽप्यगमद्यशः ।
रसताञ्चास्य संस्थानं ह्रीपदं तद्धनं स्त्रियाः ॥ २१ ॥
निन्द्यते [१]ऐयेतमित्यादिश्रुत्याप्येतादृशं पुनः ।
यन्मायाबलतः [२]पूज्यं सा ह्रींकारीति कथ्यते ॥ २२ ॥
तद्योनिमुद्रामुद्रासु मान्या चानतकर्मणि ।
तज्जगद्धेतुतत्त्वज्ञो यद्यदृश्यार्थतत्त्ववित् ॥ २३ ॥
सृष्टिः श्रीपदनिर्दिष्टा तज्जनिस्थितिहानयः ।
स्मृता मातृमहाराज्ञीसिंहासनपदैस्ततः ॥ २४ ॥

---

(१) [illegible]—" [illegible] " (छा. [illegible] १४)

(२) पूज्यम्—अस्य पूज्यत्वं तु महादानेषु गणितत्वात्—" दश पूर्वान् दशा-परेषां आत्मना सह " इत्यादिना [illegible] ।

भार्गवी वारुणी विद्यारूपोऽयं[2] तत्तथान्तिमः ।
भिक्षुसूत्राधिकरणे ब्रुवाते द्विचतुर्थके ॥ २५ ॥

---

(१) **भार्गवी वारुणी विद्या**—"यतो वा इमानि भूतानि जायन्ते" (तै-उ-भृ-व-१) इत्यादिमन्त्रोपदिष्टविद्या ।

(२) **अयम्**—सहस्रनामस्तुतौ "श्रीमाता श्रीमहाराज्ञी" इत्यादिः प्रथमः श्लोकः ।

(३) **तत्**—तस्मात्कारणात् । भार्गवीवारुणीविद्यास्वरूपत्वकारणादिति भावः ।

(४) **तथान्तिमः**—"श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी । श्रीशिवाशिवशक्त्यैक्यरूपिणी ललिताम्बिका ॥" इत्यन्तिमश्लोकः । तथेत्युक्तेः समन्वयाधिकरणार्थबोधको भवतीति तात्पर्यम् । समन्वयाधिकरणार्थस्तु प्रकृतिब्रह्मवस्तुनोस्सत्तैक्यप्रतिपादनेनैकत्वप्रतिपादको हि । तथाऽत्रापि शिवयोः (शिवायाः शिवस्य च) वस्तुनोः शक्त्यैक्यप्रतिपादकोऽयं श्लोकः । अत्र शक्तिपदेन यदुक्तं भवति तदेव वेदान्तीयसत्तापदेनेति वेदितव्यम् ।

नन्वत्र 'शिवायै नमः' 'शिवशक्त्यैक्यरूपिण्यै नमः' इति विभज्योक्तं हि श्रीमद्भास्कररायैः, तद्विरुद्धमिति चेदुच्यते—श्रीमद्भास्कररायैः शिवायाः शक्तितादात्म्यतामुरीकृत्य शिवशक्त्योर्धर्मिधर्मभावसम्बन्धाश्रयणेन वह्निदाहकतयोरिवाभेदाध्यवसायादैक्यता निरूपिता न तथाऽस्माभिः । अस्माभिस्तु कार्यकारणभावसंबन्धयोजनेन मृद्घटयोरिव शिवशक्त्योः पार्थक्यं कल्पयित्वा कार्यस्य कारणसत्ताऽभिन्नसत्ताकत्वेन तयोस्सत्तैक्यं निरूपितम् । अतश्शिवेत्यपृथग्ग्रहणम्—किन्तु शिवाशिवशक्त्यैक्यरूपिणीत्येकपदतयैव गृहीतम् । सत्येवं धर्मधर्मिणोरभेदाध्यवसायानुगृहीतैक्यतापेक्षातो वरमुक्तकार्यकारणयोस्सत्तैक्यम् । यतोऽत्र कार्यकारणयोः पार्थक्यकल्पना दृढतरा स्यात्—न तथा धर्मधर्मिणोः । तादृशपार्थक्यदर्शनं सफलयति खलु मोक्षशास्त्रम् । तथा चोक्तं भाष्यकारैः—"न चास्मिन् दर्शने ज्ञानान्मोक्ष इत्युपपद्यते—सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात्" (ब्र-सू भा-२-१-१४) इति । एवं वरिष्ठार्थप्रतिपादकत्वेनास्मदुक्तं न विरुद्धं भवति निरवद्यं च । शिवापदार्थस्तु श्रीमद्भास्करमते मङ्गलरूपिणीति—अस्मन्मते तु वेदान्तीयप्रकृतिरिति चावगन्तव्या । अस्मदुक्तार्थस्य गणितोपपत्तिमग्रे श्रीचक्रार्चनविवृतौ प्रदर्शयिष्यामः ।

अत्र केचिदाहुः—श्रीभास्कररायमतानुयायिनः; श्रीशिवेति पदं विभज्य शिवशक्त्यैक्यरूपिणीत्यत्र 'शिवा च शिवश्च शिवौ' इत्येकशेषं कृत्वा तयोश्शक्तिः—शिवशक्तिः—तयोरैक्यं रूपं यस्यास्सा इति विग्रहम् । तन्न सम्यक्; अत्रैकशेषबलादाहरणमदृष्टायाः शिवायाः दृष्टायास्तु परित्यागः । नैतावदेव दोषः; दृष्टहान्यदृष्टकल्पनारूपदोषप्रसङ्गात्

सृष्टेरव्यक्तता बोध्या स्तुत्यादौ मातृशब्दतः ।
अन्तेऽम्बिकातो व्यक्तत्वं तदियं प्रकृतिं वदेत् ॥ २६ ॥

उक्तार्थं भङ्ग्यन्तरेणाह--

सृष्ट्यव्यक्तव्यक्तभावौ स्तुत्याद्यन्तपदे क्रमात् ।
मात्रम्बिके तूचतुस्तदियं मायार्थबोधिनी ॥ २७ ॥

तथा चोक्तं श्रीशङ्करभगवत्पादैः स्फोटवादिनं प्रति "स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च, वर्णाश्चेमे क्रमेण गृह्यमाणा स्फोटं व्यञ्जयन्ति—स स्फोटः अर्थं व्यनक्तीति गरीयसी कल्पना" इति ।

किञ्च—विशेष्यं तावदेकात्र कथिता ललिताम्बिका। सा शिवाशिवशक्त्यैक्यरूपिणीति विशेषणात् ॥ निर्गुणा वागतीताऽभूदव्यक्ता ब्रह्मरूपिणी । कां तदेयं स्तुतिं ब्रूयादिति शङ्कापनुत्तये ॥ तामेवाकथयद्देवीं सगुणां व्यक्तरूपिणीम् । श्रीचक्रराजनिलयामिति त्रिपुरसुन्दरीम् ॥ तस्मात्तयोर्मध्यगा का शिवान्या कथितुं क्षमा । तच्छिवाशिवशक्त्यैक्य-रूपिणीत्येकनाम सत् ॥ कामेशमहिषीत्यादौ स्मृता त्रिपुरसुन्दरी । सगुणाऽत्र पुनस्त्वेषा निर्गुणत्वप्रसङ्गतः ॥

अपि च—अस्मिन्समासे प्राधान्यमुभयोस्स्यात्पदार्थयोः। इत्युक्तेरभवीद्द्वन्द्वः श्रीकृष्णेनाहितोऽग्रतः ॥ श्रीकृष्णेनाहितः—"अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च" (भ. गी. १०-३३) इति श्रीकृष्णेनाप्यस्य श्रेष्ठता निरूपितेति भावः ॥ तादृशं न त्यजेदन्यं नाश्रयेत्सति सम्भवे । सङ्ख्यापूर्त्यैभिलाषश्चेद्विभागोऽन्यत्र चिन्त्यताम् ॥ एतच्च—अत्रत्यगणितदृष्टान्तादयो विशेषास्तृतीयविवृतौ चतुर्थश्लोकव्याख्याने द्रष्टव्याः ।

**(१) मातृशब्दतः**—माति वर्तते गर्भोऽत्रेति माता । 'माङ् माने वर्तने च' इति धातूत्पन्नोऽयं शब्दः । एतेनाव्यक्तायां मायायां सृष्टिरव्यक्तास्ति मातृगर्भे शिशुरिवेत्यर्थः । तथा चोक्तम्—"बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनर्माया-कल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।" (दक्षिणामूर्तिस्तोत्रम् ) इति । अतोऽत्र मातृशब्दस्सृष्टेरव्यक्ततां बोधयतीति भावः ।

**(२) अम्बिका**—अम्बते जनयति (व्यक्तीकरोति) सर्वमित्यम्बिका । 'अम्ब जनने' इति धातूत्पन्नोऽयं शब्दः । अस्य "कुलोत्तीर्णा भगाराध्या माया मधुमती मही" (ल-स-ना-१३९) इति मायापदवाच्यत्वात्; मायायास्तु "मायां तु प्रकृतिं विद्यात्" (श्वे-उ. ४-१०) इति श्रुत्या मूलप्रकृतिपर्यायित्वात्, प्रकृतेस्तावत् "मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी" (ल-स-ना-८६) इत्युक्तेः व्यक्ताव्यक्तधर्मस्वरूपत्वाद्बोधकमुभयं भवतीति भावः ।

**(३) इयम्** :—एषा ललितासहस्रनामस्तुतिः ।

सृष्टिर्मायामयी माया त्वव्यक्तव्यक्तधर्मिणी ।
ब्रह्मसत्तैक्यसत्तेयं सेव्यैवातो मुमुक्षुभिः ॥ २८ ॥

पूर्वश्लोकोक्तव्यक्ताव्यक्तलक्षणे निरूपयति—

अम्बिकापदनिरुक्तितो जग-
द्रूपिणीति सगुणा तदाम्बिका ।
निर्गुणा च कलिताऽजसत्तया
सैव चेत्थमिति वक्तुमक्षमा ॥ २९ ॥

ब्रह्मवत्[1]करणशून्यकार्य-
वत्यम्बिका च जगतो जनन्यतः ।
चित्[2]कलेति कथितेन्दु[3]तोलिता
चिज्जडप्रकृतिभिन्नलक्षणा ॥ ३० ॥

तादृशीमपि व[4]शं नयेदलं
भक्तिरेव बहुसत्त्वशालिनी ।
नान्यथा गतिरतोऽत्र यौगिके
सेव्यतामुपनयेत्तयाम्बिकाम् ॥ ३१ ॥

श्रीपदत्रितयं चादावन्ते च समदर्शनम् ।
तस्मादियं ब्रह्मविद्या कामिनामिष्टकामदा ॥ ३२ ॥

---

(१) **ब्रह्मवत्**—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" (श्वे-उ-३-१९) इति श्रुत्युक्तलक्षणलक्षितब्रह्मवदिति भावः ।

(२) **चित्कला**—"चित्कलानन्दकलिका" (ल-स-ना-१४१) इति कलितेति भावः ।

(३) **इन्दुतोलिता**—"शिरःस्थिता चन्द्रनिभा" (ल-स-ना-११९) इत्युक्तेरियं मूलप्रकृत्याख्यमाया नापीन्दुवत् स्वतन्त्रप्रकाशा किन्तु चित्प्रतिबिम्बितैव । अत इयं चित्कलेति कथ्यत इति भावः ।

(४) **वशं नयेत्**—"भक्तिवश्या भयापहा" (ल-स-ना-४२) इत्युक्तेरम्बिकां स्वायत्तीकर्तुं भक्तेर्नान्या गतिरस्तीति भावः ।

श्रीचक्रभावनाजुष्टा स्तुतिरेषा सनातनी ।
भक्तानां कल्पवल्ल्येव ललितापादपूर्विका ॥ ३३ ॥

गृहादिष्विव मन्त्रेषु सत्त्वं संपादयेद्गुरोः ।
त एव फलिनो नान्ये किञ्चापकृतिहेतवः ॥ ३४ ॥

इति प्रथमा विवृतिः

## अथ द्वितीया विवृतिः

### श्रीविद्यानामकपञ्चदशीमन्त्रोद्धारः

(मन्त्रार्थसहिता)

अत्र पञ्चदशीमन्त्रोद्धारस्त्रिपुरोपनिषदुक्तः—

" कामो योनिः कामकला वज्रपाणिः
गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहासकला मायया च
पुरूच्येषा विश्वमाताऽऽदिविद्या ॥" (त्रि उ. ८. मन्त्र) इति ।

अस्येयं विवृतिः —

कामः—कः—शृङ्गाररससूचकमेतत्—अस्य कामपर्यायत्वात्—कामस्य शृङ्गारैकरसत्वाच्चोक्तमुपपन्नम् । कामस्य शृङ्गारैकरसत्वं सुप्रसिद्धमेव । तथा चोक्तम्—"अस्याःसर्गविधौ प्रजापतिरभूत्....शृङ्गारैकरसः स्वयं नु मदनः" (विक्रमोर्वशीये ऊर्वशीजनिविचारे) इति ।

योनिः—ए—वीररससूचकमेतत्—आकारस्य सम्बुद्धिरूपम् । अस्य योनित्वोपपत्तिमग्रे वक्ष्यामो मन्त्रार्थविचारे । "अक्षराणामकारोऽस्मि" (भ. गी. १०-३३) ।

"अकारेण जगत्पाता संहर्ता स्यादुकारतः ।
मकारेण जगत्स्रष्टा प्रणवार्थ उदीरितः ॥"

इत्यादिना अकारवाच्यस्य विष्णोर्जगत्पालकत्वप्रसिद्ध्या—विना वीरत्वं पालकत्वानुपपत्तेरस्य बीजस्य वीररससूचकत्वं न हि दोषाय कल्पते।

कामकला—ई—करुणारससूचकमेतत्—कामकला नाम प्राक्प्रवृत्तिरूपा—तया विनोदकारिण्या संसारश्रान्तानां जीवानां विनोदकरणं करुणयैव संपद्यते हि। अतस्तथोक्तम्। अस्य पाठान्तरम् कमला इति। एतस्याप्यर्थ ईकार एव; "ताम् पद्मिनीमीम् शरणमहं प्रपद्ये" (श्रीसूक्तम्) इति श्रीदेवीविशेषणतयोक्तत्वादीकारस्य—कमलापदस्य श्रीदेवीवाचकत्वाच्च। अत्राप्यर्थः पूर्ववदेव।

वज्रपाणिः—ल—एतद्भयानकं सूचयति। वज्रं पाणौ यस्येति विग्रहसिद्धोऽयं शब्दः। अतो यथोद्धृतदण्डपाणिं दृष्ट्वा भयग्रस्ता भवन्ति पशवः पलायन्ते च तथेमं वज्रपाणिं दृष्ट्वा जीवा भयग्रस्ता भवन्ति। अत उक्तमुपपन्नम्।

गुहाहसाः—ह्रीं ह स—बीभत्सरसात्मकमिदम्। अत्र गुहापदलक्षितो ह्रींकारः—ह स इति स्वरूपम्। एतद्बीजत्रयस्य समासबद्धत्वात् हसयोश्शिवप्रकृतिवाचकयोर्योगं व्यनक्त्यत्रत्यह्रींकारः। योगो नाम "तदैक्षत बहु स्याम् प्रजायेय" (तै-उ-) इतीक्षतिश्रुत्युक्तसृष्ट्युन्मुखत्वं यद्ब्रह्मणस्तदेव—तत्प्रकृत्योस्समावेशरूपः। अयमेव मृदि घटवद्ब्रह्मणि सत्तारूपेणावस्थितायाः प्रकृतेराविर्भाव इत्युच्यते—अयं कामकलास्वरूपः। अयमेवाकालिकश्रीललिताविर्भावपदवाच्यः "कामप्लवनाल्लोकमुद्धर्त्री ललिताम्बिका" इति तन्त्रान्तरोक्तेः। एतदेव स्मारयति सहस्रनामान्तर्गतं नाम "चिदग्निकुण्डसम्भूता" इति। एवमेतद्बीजत्रयस्य कामकलावाचकत्वात्तत्कामकलाया लौकिकार्थानुवादिन्या 'इयेतमदस्कम्' इत्यादिश्रुत्या बीभत्सितत्वादेतद्बीजत्रयं बीभत्सरससूचकं भवतीत्युपपन्नम्।

मातरिश्वा—क—एतद्रौद्ररससूचकम्। अत्र मातरिश्वा वायुः—अस्य रुद्रसम्बन्धित्वाच्चायं रौद्रः। तद्यथा "नभांसि जुहोति। अन्तरिक्षं

वै नभाँसि । तस्य रुद्रा अधिपतयः । वायुर्ज्योतिः । यन्नभाँसि जुहोति । अन्तरिक्षमेवावरुन्धे । रुद्राणां सायुज्यं गच्छति । वायुं ज्योतिरिवावरुन्धे ।" (तै-ब्रा-३-८-१८) इति श्रुत्यैकस्यैवान्तरिक्षस्य चैनन्योपाधिमतीकयोः सूक्ष्मस्थूलयोः रुद्रवाय्वोराधिपत्यज्योतिष्ट्वनिरूपणद्वारा वायोः रुद्रसम्बन्धित्वं दर्शितम् । अत्र रौद्ररसस्य रस्यत्वात्—'वायुं ज्योतिरवरुन्धे' इति तादृशवायुज्योतिषः फलरूपत्वेन प्राप्यत्वविधानाच्च—"तस्य रुद्रा अधिपतयः" इति रुद्रबहुत्वनिरूपणाच्चायं बहुरुद्रपक्षीयो रस इति वेदितव्यः ।

अभ्रम्—ह—हास्यरससूचकमिदम् । यथा—

अभ्रं हि निर्गुणं तस्माज्जनिवाचो ह्यसङ्गताः ।
तत्पात्रत्वादिदं वायुजनकं हास्यसूचकम् ॥

किञ्च—

विनोपनिषदं सर्वमभिधालक्षणोचितम् ।
वाग्वैभवं हि मिथ्यैव तस्मात्तद्धास्यसूचकम् ॥

अपि च—

तादृक्छब्दगुणं यस्मादभ्रं स्यादनृतत्ववत् ।
अनृतं परिहासार्थे जल्पन्ति खलु लौकिकाः ॥

वाचोक्तमनृतमिति श्रूयते—"अनृतं वै वाचा वदति" (तै. ब्रा. १-१-४) इति । तादृशानृतस्य परिहासे दृश्यते विनियोगः "परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः" (शाकुन्तलम्) इति ।

इन्द्रः—ल—अद्भुतरससूचकमेतत् । यथा— "इदि परमैश्वर्ये" इति धातूत्पन्नस्येन्द्रपदस्य पूर्वबीजोक्तानृतत्वधर्मविशिष्टानामपि मिथ्याभूतानामनन्तकोटिब्रह्माण्डानाम् "अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा" (ल. स. ना. १२४) इत्युक्तदिशा जननीत्वान्मायानाम्न्या अपि श्रीपरमेश्वर्या ऐश्वर्यद्योतकत्वादिदं विस्मयकरं भवत्यत उपपन्नम् ।

पुनर्गुहासकलाः---ह्रीं सकल—शान्तरससूचकमेतत्। अत्र गुहा-पदलक्षितो ह्रींकारः—'सकल' इति स्वरूपम्। एतद्बीजचतुष्टयस्य समास-बद्धत्वादत्रत्यस्य कलबीजवाच्यं पूर्वबीजोक्तानन्तकोटिब्रह्माण्डैश्वर्यं ह्रींरूपमिति—मिथ्येति (इदमित्थमिति वक्तुमशक्यमिति) तात्पर्यार्थः—ह्रीं पदस्य माया-वाचकत्वात्। या मा सा मायेति मायापदनिर्वचनम्—या–या (अस्ति) मा–(सा) नास्ति इति विरुद्धधर्मयोरस्तिनास्तिपदार्थयोः पात्रत्वादस्य माया-नामेत्यर्थः। इदमनिर्वचनीयं विद्युदिवेति भावः। तथा चोक्तं **चित्सूर्यालोक-नाटकनान्द्याम्**—

> "ध्वान्तध्वंसिनि भर्गगेहिनि जगद्व्यापारलीलापरो-
> न्मेषाढ्ये निजमर्मविन्निरवधिस्वाधीनशक्त्युज्ज्वले।
> व्यक्ताव्यक्ततयेदृगित्यलमनिर्देश्यां तटित्सन्निभां
> शक्तिं त्वां त्रिपुरामबोधवरणध्वंसाय संप्रार्थये॥"

इति। एतेन सर्वसगुणाभावद्योतकत्वेन शान्तरसः सूचितो भवति।

मायया च ---ह्रीं—समष्टिभूतत्रिखण्डाख्यदशममुद्रानमस्कार्यमूल-प्रकृतिसूचकमेतत्---पूर्वोक्तानाम् नवानामपि रसानां मूलप्रकृतिभूतमायोत्पन्न-त्वात्। एवं श्रीविद्या तावन्नवरससूचिका भवतीति विज्ञानेन "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" (श्वे. उ. ४-१०) इति श्रुत्युक्तमूल-प्रकृतिभूतमायाया इव तत्कार्यभूतनवरसात्मकप्रपञ्चस्यापि ब्रह्मसत्ताऽभिन्नसत्ता-कत्वमस्तीति विज्ञानद्वारोपासकस्याद्वैतसिद्धिरवश्यंभाविनीत्यत्रास्ति परम-प्रयोजनम्। अत एवोक्तं

> "चरमे जन्मनि यथा श्रीविद्योपासको भवेत्।
> नामसाहस्रपाठश्च तथा चरमजन्मनि॥"

(ल. स. ना. फ. श्रु. ७४-७५) इति।

## अथ श्रीविद्याऽपरनामकपञ्चदशीमन्त्रार्थः

एतन्मन्त्रार्थोऽपि पूर्ववदद्वैतसिद्धिं साधयत्युपासकस्य। यथा —

**के-ए-ईल-ह्रीं-हस-कहलह्रीं-सकलह्रीं**

इति मन्त्रपदविभागः। अथान्वयः—

**ए**—इदमाकारस्य सम्बुद्धिरूपम्। आकारो नाम अकार एव— "अ इत्यष्टादशानां संज्ञा" इत्युक्तेः। स तावत्सर्ववर्णमूलत्वाद्योनिसंज्ञितो भवति श्रेष्ठश्च। अत एवोक्तं गीतासु "अक्षराणामकारोऽस्मि" (भ. गी-१०-३३) इति। एतेन सर्वजगद्वाचकसर्वाक्षरयोनित्वेन वाच्यवाचकाभेदधिया आकारस्य जगन्मातृत्वमुपपन्नम्। तथा विद्यायास्सम्बुद्धिः— 'ए' हे जगन्मातः! परमेश्वरि! **के**—परब्रह्मणि तद्विषयक इत्यर्थः।

**ह्रीं**—अज्ञानात्मिकां लज्जाम्—अविद्यारूपामित्यर्थः। **ईल**—निवर्तय। इति प्रथमकूटार्थः।

**कहलह्रीं**—कशब्दवाच्यं ब्रह्म—तद्विषयक-हलह्रीं नाम लाङ्गलदण्डवदनुस्यूतां ह्रींकारवाच्याम् विद्याम्। हस-प्रकाशय। अत्र ह्रींपदस्य विद्यावाचकत्वं तु अस्य मायापरपर्यायत्वेन मायाया अस्ति नास्तीति विरुद्धधर्मद्वयवत्त्वेन चास्याप्यस्ति विद्याविद्यात्मकविरुद्धार्थद्वयवाचकत्वमित्यवगन्तव्यम्। इति द्वितीयकूटार्थः।

**सकलह्रीं**—सकलवाच्यं सगुणब्रह्म; सृष्ट्युन्मुखम्—प्रपञ्चादिरूपेणावस्थितं च। तद्विषयक 'ह्रीं' नाम प्रपञ्चसत्यतारूपाज्ञानमित्यर्थः- तादृशीमविद्यारूपाम्। ईल-निवर्तयेति प्रथमकूटस्थक्रियया अन्वयः काकाक्षिगोलकन्यायेन। इति तृतीयकूटार्थः।

एवं च हे परमेश्वरि! (मम) प्रपञ्चसत्यतारूपाविद्यां निराकृत्य—ब्रह्मावबोधविषयकजाड्यतापाकरणद्वारा ब्रह्मतत्त्वावबोधं कुर्विति पिण्डितार्थः। अत इयं श्रीविद्या नाम ब्रह्मविद्येति घुष्यतेऽन्वर्थः।

इति द्वितीया विप्रुट्

## अथ श्रीचक्रार्चनं नाम

## तृतीया विवृतिः

### श्रीचक्रस्वरूपम्

**बिन्दुत्रिकोणवसुकोणदशारयुग्म-**
**मन्वस्रनागदलसंयुतषोडशारम् ।**
**वृत्तत्रयं च धरणीसदनत्रयं च**
**श्रीचक्रराजमुदितं परदेवतायाः ॥ इति ।**

**रुद्रयामले त्रिपुरास्तवराजे** (७, ८) श्रीचक्रोद्धारः—

भूगृहं गुणरेखाढ्यं वेदद्वारोपशोभितम् ।
त्रिवृत्तं षोडशदलं तथाष्टदलकर्णिकम् ॥
मनुकोणं द्विदिक्कोणं वसुकोणं त्रिकोणकम् ।
मध्ये बिन्दुमहाचक्रं नित्यं श्रीत्रिपुरामयम् ॥ इति ।

ततो भूर्नागारं नृपतिदलमस्मात्त्रिवलयं
चतुर्द्वाः प्राकारत्रितयमिदमेवाम्ब शरणम् । (**सुभगोदयम्**-२) इति ।

अत्र भूपुरादिबिन्द्वन्तं नवावरणानि दृश्यन्ते आरोहणक्रमेण । तेषा-मर्चनाविधौ रसादीन् सुलभतया विज्ञातुं श्रीचक्रपूजासङ्केतपदकं परिलिख्यते ग्रन्थान्ते (७२ क) दृश्यताम् ।

तद्व्याख्यानं त्वत्रोच्यते तदादौ श्रीचक्रस्थितवृत्तत्रयविचारणा च । यथा—अत्र षोडशदलधरणीसदनत्रयान्तरे स्मारितं हि वृत्तत्रयम्—अस्मिन् विषये केषाञ्चिदाशयः ; एतस्यार्चनाविधावप्रसक्तत्वान्न पृथग्दर्शनीयं परिलेखन इति—वृत्तत्रयं चेति पदार्थस्तु, भुवनाश्र-अष्टदल-षोडशदलावरणभूतवृत्तान्येव वृत्तत्रयमिति च ।

तत्तु न सम्यक् ; श्रीचक्रं नाम मायापरनाम्न्याः पराशक्तेस्सृष्टिरूप-सगुणप्रपञ्च एव । एतत्सगुणस्य निर्गुणं ब्रह्माधिष्ठानमित्यनुक्त्वा न पार्यते ; **ब्रह्मसत्ताऽभिन्नसत्ताकत्वात्सगुणस्य । तादृशाधिष्ठानब्रह्मद्योतकतया एकत्रैव वृत्त-**

त्रयं लेखनीयम्; "त्रिपादस्यामृतं दिवि" इति श्रुत्या त्रिपाद्ब्रह्मणो दिवी-त्येकत्रावस्थितेर्दर्शितत्वात्। किन्त्वस्य निर्गुणत्वेन नोपास्यत्वम्—अतोऽस्यार्चनाविधावप्रसक्तिः। परन्त्वस्त्येव ज्ञेयत्वम्। "आत्मा वाऽरे द्रष्टव्यः" (बृ-उ-४-५-६) इत्यादिना द्रष्टव्यत्वविधानात्। अत्र दर्शनं नाम ज्ञानमेव। अतोऽस्यास्तित्वद्योतनायावश्यं लेखनीयमेकत्र वृत्तत्रयम्। नो चेत्तथा; प्रहर-प्रहरोच्चारितगामानयेत्यादिवाक्यवदनर्थकरं भवति सान्निध्यायोगात्।

अपि च मन्वश्रादीनामावरणभूतवृत्तानि पुनर्यन्त्रपरिलेखनसौकर्यायैव लिखितानि न तन्त्रस्मारितानि; अतो न तेषां प्राधान्यम्। प्राधान्यं पुनः षोडशदलधरणीसदनत्रयान्तरालस्थवृत्तत्रयस्यैव—अस्य तथा स्मृतत्वात् 'अस्मा-त्त्रिवलयम्' (सुभगोदयम्) इति। अत्र त्रिवलयस्य अस्मादिति पञ्चमी-निर्देशेन विधीयमानत्वात्—तत्—षोडशदलानन्तरमेवाव्यवहितं लेखनीयम्। तथा चोक्तम् पाणिनिना "तस्मादित्युत्तरस्य" (१-१-६७) इति। श्रीविद्यारण्यकृतश्रीचक्रेऽप्येवमेवास्ति वृत्तत्रयम्। दृश्यतां श्रीविद्यानगरस्थ-श्रीविरूपाक्षदेवालयाङ्कस्थश्रीभुवनेश्वर्यालये श्रीचक्रं गुण्डूरुग्रामस्थितशृङ्गेरी श्रीविरूपाक्षश्रीपीठस्थितश्रीचक्रं च एतच्चक्रद्वयं श्रीविद्यारण्यकृतमेव तथा न्यायस्थाननिरूपणात्। प्रकृतमनुसरामः—

## श्रीचक्रपूजासङ्केतपदकव्याख्यानम्

अस्मिन् यन्त्रे चतुर्दशकोष्ठकास्तिर्यग्वर्तन्ते—अधस्ताद्दश। तत्र त्रयोदशे तिर्यक्कोष्ठे शृङ्गारादिरसभेदा निरूपिताः—द्वादशे तु तेषां (शृङ्गारादीनाम्) क्रमेण रति-उत्साह-प्रभृतयः स्थायीभावाश्च। स्थायीभावो नाम विभावादिचतुर्विधभावैः स्सम्पादितस्वादुत्वंवानेव भावः। तथा चोक्तम् दशरूपके—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानस्स्वादुत्वं स्थायीभावो रसस्स्मृतः॥ इति।

---

न्यायस्थानम्—Court.

अत्र शृङ्गाराद्या रसभेदा नव—तथा चोक्तम्—

"शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ॥" इति ।

तेषां स्थायीभावाः—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायीभावा नव क्रमात् ॥" इति च ।

अथ विभावादिचतुष्टयस्वरूपं किञ्चिदिवोच्यते—

"विभावः कथ्यते तत्र रसोत्पादनकारणम् ।
आलम्बनोद्दीपनात्मा स द्विधा परिकीर्त्यते ॥" इति ।

तत्रालम्बनस्तु रससमवायिकारणम्-इतरत्कारणजातमुद्दीपनविभावः । स चतुर्विधः-

"आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः ।
तटस्थश्चेति विज्ञेयश्चतुर्धोद्दीपनक्रमः ॥
आलम्बनगुणो रूपयौवनादिरुदाहृतः ।
तच्चेष्टा यौवनोद्भूतहावभावादिका मताः ॥
नूपुराङ्गदहारादि तदलङ्करणं मतम् ।
मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः ॥" इति ।

अथ अनुभावलक्षणम्—

"कार्यभूतोऽनुभावस्स्यात्कटाक्षादिशरीरजः ।" इति ।

अथ सात्त्विकभावाः—परगतसुखादिभावनाभावितान्तःकरणत्वं सत्त्वं—
ततो भवाः सात्त्विकाः ।

"स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥"

अथ व्यभिचारिभावाः—

निर्वेदग्लानिशङ्काख्या तथाऽसूयामदश्रमाः ।
आलस्यञ्चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥
सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्था मदोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः ॥ (शृङ्गारतिलकम्— इति ।

अत्रोक्तविभावानुभावव्यभिचारिभावास्तु आश्रयभेदेन सङ्करा भवन्तीत्युच्यते । यथा लोके कारणकार्यसहकारिशब्दवाच्याः नायिकानायककटाक्षभ्रूविक्षेपनिर्वेदादयः; काव्यनाट्ययोस्तु विभावानुभावव्यभिचारिशब्दव्यपदेशा भवन्ति । तथा चोक्तं काव्यप्रकाशे —

"कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेस्स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावाश्चानुभावाश्च कथ्यन्ते व्यभिचारिणः ।" इति ।

शृङ्गारवीररौद्राद्भुतानां लोकोत्तरनायकाश्रयत्वेन परिपोषातिशयः । अत एव शृङ्गारस्य म्लेच्छादिविषयत्वे रसाभासत्वम् । तथा चोक्तम् —

"एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥" (प्रतापरुद्रीयम्) इति ।

अलमेतावाता । विस्तरस्त्वलङ्कारशास्त्रे द्रष्टव्यः । इति द्वादशत्रयोदशकोष्ठविवृतिः ।

एवमुक्तशृङ्गाराद्या नवरसाः क्रमेण तृतीयतिर्यक्कोष्ठोक्तत्रैलोक्यमोहनचक्रादिसर्वानन्दमयचक्रान्तं नवसु चक्रेषु विभावनीयाः । तथा सप्तमकोष्ठोक्ताणिमादिराजराजेश्वर्यन्ता देवताः; तथैवाष्टमकोष्ठोक्तप्रकटादिपरापररहस्ययोगिन्यन्ता योगिनीः; तथा च नवमकोष्ठोक्तत्रिपुरादिमहात्रिपुरसुन्दरीचक्रेश्वर्यन्ता चक्रेश्वरीश्च विभावयेत् । अथ दशमकोष्ठोक्तसर्वसंक्षोभिण्यादिसर्वयोनिमुद्रान्तमुद्राभिः— एकादशकोष्ठोक्तत्रद्वीजपूर्वकं नवस्वावरणेषु पूर्वो-

क्ततत्तद्देवताध्यानपूर्वकं नमस्कारा: कर्तव्या: । चतुर्दशकोष्ठोक्ततत्तद्बीजसंपुटिततत्तन्मन्त्रै: षष्ठकोष्ठोक्तप्रदक्षिणादिक्रमेण नवस्वावरणेषु पूजां कुर्यात् । अवशिष्टप्रथमद्वितीयचतुर्थपञ्चमकोष्ठगतांशास्तु तत्तदावरणस्वरूपनिरूपणार्था भवन्ति । एवं संक्षिप्योक्तं श्रीचक्रपूजासङ्केतपदव्याख्यानम् ।

अथैवमुक्तरससाम्राज्यस्योच्यतेऽद्वैतसिद्ध्यन्वय: । अत्र मध्येप्रसङ्गम् ; ननु !

के वा न सन्ति वेदान्ताऽद्वैतधीप्रतिपादका: ।
ग्रन्था: किमर्थमेषा ते पीडेत्यत्रोच्यते लघु ॥ १ ॥

सन्ति चेत्सन्तु का हानिर्ग्रन्था अद्वैतसिद्धये ।
ते पुना रुचिभिर्भिन्नास्तथाऽयमपि चास्तु न: ॥ २ ॥

अथ कृतप्रतिज्ञामनुसरति—

रसेष्वष्टावदिमास्तु सगुणास्सृष्टिगोचरा: ।
निर्गुणश्चरम: शान्तोऽद्वैतसिद्धिप्रद: पुन: ॥ ३ ॥

द्विरूपफलिनश्चैते देवीरूपा यतस्तत: ।
सा शिवाशिवशक्त्यैक्यरूपिणीति निगद्यते ॥ ४ ॥

द्विरूपेत्यादि—इमे देवीरूपा रसा यतो द्विरूपफलदा: ततस्सा शिवाशिवशक्त्यैक्यरूपिणीति कथ्यते । तां विवृणमहे । अत्र केचित् शिवेति पदं विभज्य शिवशक्त्योरैक्यं कथयन्ति—तन्न घटते ; तयोर्गुणगुणिसम्बन्धानुविद्धत्वात् गुणगुणिनोरविनाभावाच्च । किञ्च पृथग्वस्तुनोरेवैक्यप्रसक्तिर्नापृथग्वस्तुनो: । तस्माच्छिवाशिवयोरवैक्यं वक्तव्यम् । तदपि सङ्ख्यादृष्टान्तेनैव

(१) शान्त—अयं कथमद्वैतसिद्धिप्रद इति चेदुच्यते न्यालङ्कारिकाणामनुरोधेन । यथा—"सर्वप्रकारै: सम्पूर्णकामस्सन्तुष्टमानस: प्राप्नोति । मुक्तिं चरमे शान्तेनैव रसेन स: ॥" (भावप्रकाशवचनम्—प्रतापरुद्रीये) इति । "मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात्सर्वरसेभ्य: प्रधानतम: स चायं शान्तरस:" (लोचनवचनम्—प्रतापरुद्रीये) इत्यादिना मोक्षसाधनत्वमस्य निरूपितम्—स्वरूपं चैतत्स्थायीभावस्य शमस्य "वैराग्यादिना निर्विकारचित्तत्वं शम:" इति लक्षणनिरूपणद्वारेणैव । अतोऽयमद्वैतसिद्धिप्रद एव । वेदान्तेऽप्यद्वैतसिद्धे: (मोक्षस्य) शमादिषट्कस्यावश्यकता निरूपितैव हि ।

निरूपणीयम्—ऐक्यमित्येकाङ्कसम्बन्धदर्शनात् । एकद्व्यादिशब्दाः खलु सङ्ख्यावाचकाः । अतोऽत्र सङ्ख्याद्दृष्यान्तेऽपि निरूप्यते ।

शिवशक्त्यैक्यरूपिणी अत्रैक्यं नाम न हि द्वयोर्वस्तुनोरेकत्रावस्थानं, किन्तु तद्वस्तुद्वयनिष्ठयोर्गुणरूप(विशेषणरूप)सङ्ख्ययोरेकीभावः— स न जातु घटते; भिन्नशब्दप्रतिपाद्ययोर्द्रव्ययोस्तमोगुणनाशावधि—अङ्कानां घात(घातप्रकाशकाङ्क)नाशावधीव । अत्र शब्दो नाम धर्मिवाचकः तत्तद्धर्मिनिष्ठधर्माणां भेदसद्भावे तत्तद्धर्मिवाचकशब्दानामपि भेदस्सम्भवति । अतो घटपटादिशब्दा भिन्नभिन्नद्रव्यवाचका भवन्ति—गणिते सघाताङ्का इव—जीवा इव च वेदान्ते । तादृशभिन्नशब्दप्रतिपाद्यद्रव्यनिष्ठाङ्कैक्यभावो न जातु घटते तन्निष्ठतमोरूपघाताङ्कनाशावधीति तात्पर्यम् ।

घातो नाम स्वेन स्वगुणनरूपगुणविशेषसङ्ख्यायाः, जीवे पुनरयं सात्त्विक-राजस-तामसाहङ्कारत्रयान्तर्गततामसाहङ्काररूपः — एतत्परिमितिपर्यायबोधकसङ्ख्यैव सूक्ष्मरूपेण सङ्ख्यायाः शिरसि $२^{२}$; $२^{३}$; $२^{४}$ एवं रूपेण लिख्यते । तदेव घातप्रकाशक इत्युच्यते ।

ननु सङ्ख्यासङ्ख्येय(द्रव्य)निष्ठघाताङ्कतमोगुणयोः कः सम्बन्ध इति चेदुच्यते ; सङ्ख्याया घन-गुण-घाताख्याः गुणास्त्रयस्सन्ति—एवं सङ्ख्येयस्यापि (द्रव्यादिपदार्थस्यापि) सत्त्वरजस्तमोनामकाः । अतस्ते सङ्ख्यानिष्ठघनादयस्त्रयः क्रमेण द्रव्यनिष्ठसत्त्वादि त्रिगुणान् सूचयन्ति तयो(स्सङ्ख्याद्रव्ययो)रविनाभावसम्बन्धसद्भावहेतोः । तथा चोक्तम् श्रीपूज्यपादैः **बोधानन्दभारती-महास्वामिभिः**—

अविनाभावतस्सङ्ख्यासङ्ख्ययावेक एव हि ।
तस्माद्गुणैक्यं प्रवदेद्वस्तुतोऽभिन्नयोस्तयोः ॥

---

(१) **घन-गुण-घाताख्या**—घन-सङ्कलन २ + २ ; गुणन २ × २ ; घात $२^{२}$ एवं रूपाः—जीवे पुनरिमे क्रमेण सात्त्विकराजसतामसाहङ्कारा इत्युच्यन्ते । **एतत्त्रयमेव** जीवस्योपाधिस्तं बोलयति ।

गुणत्रयं च सङ्ख्यायास्सङ्ख्येयस्य गुणत्रयम् ।
घनादित्रितयाऽभिन्नं सत्वादित्रितयं क्रमात् ॥
बिन्दुना बिन्दुहरणे स्यादेकाङ्कसमुद्भवः ।
तस्य निर्घाततहेतोर्बाध्यते भेदशून्यता ॥
यस्तृतीयगुणो घातस्तमोरूपस्स गृह्यते ।
तदभावान्निस्तमस्त्वं नियन्तृत्वमतस्स्फुरेत् ॥

(परतत्त्वोपन्यासे २५-२८) इति ।

अत एतदुक्तं भवति --

यथाङ्कानां भेदभावो घातादेव प्रजायते ।
तथा तमोगुणादेव द्रव्याणां भेदसम्भवः ॥
तमोनाशे भेदनाशश्चैकत्वं सर्ववस्तुषु ।
घातनाशाद्यथासङ्ख्यास्त्वेकत्वं भेदशून्यता ॥ इति ।

एतादृशभेदशून्यतैवाद्वैतप्रतिपत्तिरिति जोघुष्यते वेदान्तवाक्यैस्तत्त्वमस्यादिभिः । सैव मुक्तिहेतुः । सा तावद्ब्रह्मणो जगद्रूपप्रकृतेश्च मृद्घटयोरिव समकालिकद्वैतभान एव सम्भवति--नाद्वैतभाने--रज्जुसर्पयोरिवासमकालिकद्वैतभाने वा । तादृशाद्वैतसिद्धिः शिवशक्त्योर्न हि सम्भवति । सम्भवति तु शिवाशिवयोश्शक्त्योः । यतः गुणिनश्शिवस्य तद्गुणभूतशक्तेश्चाविनाभावसम्बन्धान्न पार्थक्यसिद्धिः--यथा ब्रह्म--तत्सत्तयोः ; यथा वाह्निदाहकतयोः । ततो न द्वैतभानम् । किन्तु तटस्थकारणं ब्रह्म जगत इत्यङ्गीकारे जगद्रूपशिवायाः ब्रह्मरूपशिवस्य च पार्थक्यसिद्धिः ; ततः मृद्घटयोरिव समकालिकद्वैतभानं च ।

प्रकृतिब्रह्मणोर्द्वैतभाने नास्य विपर्ययात् ।
श्रुत्याद्वैतं मुक्तिकेतुर्गणितेन च सिद्ध्यति ॥

नन्वेवं द्वैतभानापन्नयोरन्यतरस्य शिवस्य निस्तमस्कत्वात्तस्य नित्यैकत्वं हि--तच्छक्तेश्च--शक्तिशक्तिमतोरविनाभावात् । इतरस्याः प्रकृतिरूपशिवायास्तु

सतमस्कत्वादनन्तत्वम्--तच्छक्तेश्च । एवं विजातीययोश्शिवाशिवयो-स्तच्छक्तयोर्वा कथमेकीभावोऽद्वैतरूपः ? यं विनामोक्षानुपलब्धिरिति चेदुच्यते; उक्तमेवैतत् 'श्रुत्याद्वैतं.....सिद्धयति ' इति। अस्यायं भावः—श्रुत्या तत्त्वमस्यादि-वाक्यरूपया मुक्तिलक्षणभूतमद्वैतज्ञानमुपदिष्टमेव—तत्तःब्रह्मणितेनापि सिद्धयतीति निरूपितमिति भावः ।

अत्र गणितनिरूपणं यथा- -अत्रोपासनाविधौ, वाग्व्यवहृतौ वा ब्रह्म नाम सिसृक्ष्वेव —

"यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।"

"चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।
अद्वैतभाषया चोद्यं नापि नास्ति तदुत्तरम् ॥" इत्याद्युक्तेः ।

ननु ! अयमेव सगुणब्रह्मेति—हिरण्यगर्भ इति ईश्वर इति वा व्यव-ह्रियते । अस्य सोपाधिकत्वेऽपि तमश्शून्यत्वात्; गणिते ५$^{0}$ = १$^{0}$ = १; एवंरूपनिर्घाताङ्कस्य भेदशून्यता स्वयंपतिष्णुः । एतद्विपरीतायाश्शिवायास्ता-वत्प्रकृतिरूपायाः कथं भेदशून्यता ? यां विना द्वयोः (ब्रह्मप्रकृत्योः) नैक्यं घटते-तदभावे कथमद्वैतसिद्धिः तत्साध्यमोक्षोपलब्धिश्च ? इत्यत्रोच्यते; ज्ञान-द्वारेणेति । तज्ज्ञानं पुनः "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ-उ-४-५-६) इति विधानात् श्रवण-मनन-निदिध्यासैस्साध्यं भवति । तानि श्रवणादीनि क्रमेण स्तुति-जप-अर्चन-संज्ञकानि मन्त्रशास्त्रे । तैरुपासकास्स्व-स्वनिष्ठमायांशगताविद्यारूपतमोनाशं कृत्वा सम्पादयन्त्यात्मनो भेदशून्यतां यया स्याददद्वैतप्रतिपत्तिः । न हि कृत्स्नप्रपञ्चगतमायायास्तमोनाशे प्रसक्ति-र्जीवस्य—तस्य परिच्छिन्नत्वात् । एवमुपासकस्योपासनाजनितज्ञानबलेन स्वनिष्ठमायांशस्य[illegible]तमसः (ब्रह्मभिन्नाभिन्नमायाः [illegible]रूपाः ज्ञानात्मक-तमसः) नाशस्सम्भवति—यथा मृद्घटयोर्मृत्सत्ताभिन्नसत्ताको घट इति ज्ञानेन घट-मृद्रूपद्वैतज्ञानात्मकतमोनाशः—तथैव जीवनिष्ठमायांशभूतायाश्शिवायास्तमोनाशन-माहुः पण्डिताः । एतेन घटस्येव शिवाया—ब्रह्मसत्ताऽभिन्नसत्ताकत्वं सम्भवति । ततस्तयोश्शिवाशिवयोस्तच्छक्तयोर्वा ऐक्यता सम्पद्यते मृद्घटयोरिव ।

अत्र गणितदृष्टान्तो यथा—एकाङ्को हिरण्यगर्भप्रतीकः। हिरण्यगर्भस्तु सिसृक्षुर्ब्रह्मैव। अतोऽस्य मायास्वरूपगुणत्रयाविष्टमूर्तिमत्त्वं सम्भवति—मायायाश्च स्वरूपाविर्भावः—[१]अग्नि-जलवाय्वोर्नीरूपयोर्योगे सरूपजलाविर्भाववत्।

उदाहरणम्—१ इदमेकाङ्करूपं प्रथमजीवप्रतीकम्। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा-उ) इति श्रुतेः। अस्याधोभागे भाजकरूपेण—उत्तरपार्श्वे गुणकरूपेण—शिरसि घातप्रकाशकरूपेण चैकाङ्कः प्रकृतिरूपः $\div \frac{१^{१} \times १}{१}$ एवंरूपेणानुस्यूतो भवति पूर्वपार्श्वे + एवंरूपघनसंज्ञा च। इयं संज्ञा च प्रकृतिरूपैव। एवं सर्वेषामङ्कानां च।

गुणकभाजकतौल्यं पुनः सङ्ख्यायास्स्वरूपस्थितिं द्योतयति हि। अतस्सङ्ख्यायास्सर्वत्र प्रकृतिप्रतीकैकाङ्कः गुणक-भाजकरूपेणावतिष्ठते। यद्येवं न स्यात्; तदा भाजकस्थानेऽन्यस्य प्रवेशावकाशः—तेन सङ्ख्यामूर्तिवैकृतिश्च। अतः स्वधर्मपालनाय प्रकृतेरेवंरूपावस्थितिः—प्राक्प्रवृत्तिरूपा हि प्रकृतिः (सत्त्वरजस्तमोगुणात्मिका)। एतद्विपरीत-ऋण-हार-मूलानि तु प्रत्यक्प्रवृत्तजीवस्य नित्यानित्यवस्तुविवेक-इहामुत्रफलभोगविराग-शमादिषट्कसम्पत्ती - विडम्बयन्ति।

अत्र घातरूपाङ्कस्य खलु नाशात्तमोगुणनाशः प्रतिपादितो जीवस्य। तत्प्रकारं विवृणमहे— घातप्रकाशकाङ्कानां भाज्यभाजकनिष्ठानां परस्परमूनीकरणाद्भाज्यभाजकयोस्सङ्ख्ययोर्भागहारकार्यं भवति।

अत्र प्रथमोदाहरणम् —$\frac{३^{३}}{३^{२}} = ३^{३-२} = ३^{१} = ३$ एवं घाताङ्कगणितरूपम्।

इदमेव सङ्ख्याभागहारक्रियाम् $\frac{३^{३}}{३^{२}} = \frac{३ \times ३ \times ३}{३ \times ३} = \frac{२७}{९} = ३$ एवं रूपं भवति—एतदुभयोः फलं समानम्।

---

(१) **अग्नि-जलवायू**—Oxygen, Hydrogen.

द्वितीयोदाहरणम्— $\frac{३^{३}}{३^{३}} = ३^{३-३} = ३^{०} = १$ एवं घाताङ्कगणितरूपम्।

इदमेव सङ्ख्याभागहारक्रियायाम् $\frac{३^{३}}{३^{३}} = \frac{३\times३\times३}{३\times३\times३} = \frac{२७}{२७} = १$ एवमुभयोः फलम् समानम् । एतदुदाहरणद्वयेन किं सिद्धमिति चेत; यस्य कस्याप्यङ्कस्य घातप्रकाशकस्त्वेकाङ्कश्चेत् सोऽङ्कः स्वस्वरूपेणैवावतिष्ठते— शून्यं चेत्स्वरूपं विहायैकाङ्कतां प्रतिपद्यत इति सिद्धम् ।

एवञ्च ; अत्र मोक्षकामी जीवः । स पुनः सघातैकाङ्क $(१^{१})$ एवं रूपैकाङ्कस्थानीयः । अयं स्वकृतकर्मवशात् ; $१+१+२=४$ ; $१\times२=२$ ; $१\times४=४$ इत्यादिसङ्ख्याकर्मवशात् सङ्ख्येव (अथात्र एकसङ्ख्या एकाद्यङ्कसङ्कलनात् ; द्व्यादिगुणनाच्च ४, २, ४ इति मूर्तिभेदं प्राप्ता तद्वत्) पशुपक्ष्यादिनानामूर्तिभेदमवाप्नोति— तत्तद्योनिषु नानासुखदुःखादिक्लेशाननुभवति। तादृशक्लेशहानायैवास्य मोक्षकामित्वम् । एतन्मोक्षलाभाय प्रथमं मूर्तिभेदशून्यता सम्पादनीया साङ्ख्ययोगान्यतरयोगमार्गेण— अस्य योगमार्गस्य निरपायत्वात् । तत्तावत्फलकाङ्क्षारहितशास्त्रीयकर्माचरणवशादुपलभ्यते। तथा चोक्तं गीतासु—

"मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ।" (२-४७) इति । गणिते पुनः घातशून्यतया भेदशून्यता । सा पुरोक्तदृष्टान्ते दरीदृश्यते; समानमूर्त्योः समघाताङ्कविशिष्टयोरेव घाताङ्कोनीकरणजनितपूर्ण(शून्य) दर्शनात्। इदमेव जीवस्य तमोगुणनाशकरणप्रतीकम् ।

अत्रत्यसमानमूर्तित्वं जीवकृतोपासनाबलेन जीवस्य सिद्ध्यति ।

"अहं देवी न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् ॥"

इति देव्यहंभावनापूर्वकमेव हि प्रारभ्यते श्रीदेवीनवावरणार्चनम् । तादृशपूर्णभावनयैव प्राप्नोति श्रीदेवीसमानमूर्तित्वमनन्तत्वं चोपासकः "भावनायां तु पूर्णायां फलं पूर्णं भविष्यति"—इति, "ज्ञातृज्ञेयस्वरूपिणी" इति चोक्तेः ।

एवमारोहक्रमेण कृताष्टमावरणावधिकपूजाफलम्। अत्रानन्तत्वं तावदष्टमावरणे सकलब्रह्मोपासनविधानादिति ज्ञेयम्। इदमेव गणिते सङ्ख्यायास्समानमूर्तित्व-अनन्तत्वप्रतीकं भवति। एतेनोपासको भूयान्महिमानं दर्शयितुं समर्थः। किन्त्वयं हिरण्यगर्भतादात्म्यतामायाति। "अहं ब्रह्मास्मि तत्त्वमसि" इत्यादिभिरस्य ब्रह्माभिन्नत्वदर्शनात्; न पुनरयं निर्गुणमुक्तिपात्रम्—सोपाधिकत्वात्। यद्यप्ययं सोपाधिकस्तथापि तस्य घाता (घातप्रकाशका)-नन्तत्वसिद्धेः; घातानन्तवत्या श्रीदेव्या शिवरूपया स्वयमेकीभूय, तां स्वायत्तीकर्तुं समर्थः—अत एवायं स्वाधीनमायो भवति। अत्र शिवाशिवैक्यभावो गणितदृष्टान्ते यथा—$१^{\infty}$ अयमेकाङ्कः शिवाप्रतीकः—एवमेवायं $१^{\infty}$ शिवप्रतीकः (सगुणब्रह्मप्रतीकः) इत्थमेतयोरस्ति मूर्तिसाम्यम्—किन्तु चिज्जडप्रकृतिकत्वाद्विजातीयत्वं च। अतोऽनयोर्योगस्तु "धनर्णयोरन्तर-मेव योगः" (लीलावती-बीजगणितम्) इत्युक्तदिशा हरणमेव। तत् (हरणम्) द्विविधम्, ऊनीकरणम्—भागहरणम् इति। एतद्द्वितयमपि यदि समानमूर्त्योः तदा प्रथमस्य शून्य(०)रूपम्—द्वितीयस्य निर्घातैकाङ्क $१^{०}$ रूपम्—इत्येवं फलद्वयं भवति हि। एतयोराकृती—$१^{\infty} - १^{\infty} = ०$; $\frac{१^{\infty}}{१^{\infty}} = १^{\infty-\infty} = १^{०}$ इत्येवंरूपे। एते क्रमेण निर्गुणसगुणमुक्तिसूचिके भवतः। एतदुभयमपि निर्दिशति सहस्रनामान्तिमश्लोकः—

"श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी।
श्रीशिवा शिवशक्त्यैक्यरूपिणी ललिताम्बिका॥"

इति। अत्र प्रथमं तावत् श्रीमत्त्रिपुरसुन्दरी—सा सगुणमुक्तिप्रदा—तस्याः श्रीचक्रराजनिलया इति विशेषणसद्भावात्। श्रीचक्रं नाम श्रीपदवाच्य-सृष्टिसमूहरूपचक्रम्—तदेव ब्रह्माण्ड इत्युच्यते। तद्राजत्वं नाम तच्छ्रेष्ठत्वम्। अत्र श्रेष्ठत्वं तु सङ्ख्यातीतानन्तत्वद्योतितब्रह्माण्डसमूहजनकशक्तिमत्त्वम्—तदेव "बिन्दुत्रिकोण" इत्यादिश्लोकनिर्दिष्टं श्रीचक्रराजम्—तदेव निलयं

स्थानं यस्या इति विग्रहः। अत एवास्याः "अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा" इत्यन्वर्थं नाम। एतत्पर्यन्तमूशति प्रथमश्लोकोक्तश्रीमहाराज्ञी-पदार्थम्। एवंलक्षणलक्षिता श्रीमत्त्रिपुरसुन्दरी सगुणब्रह्मत्वसाधनायोपयुज्यते-ऽष्टमावरणे। अथ निर्गुणब्रह्मत्वसाधनायोक्तं बिन्द्वर्चनं नवमावरणे। तत्स्वरूपं "पूर्णमदः पूर्णमिदम्" इत्यादिमन्त्रोक्तम्—तदर्चनेन "ब्रह्मविदाप्नोति परम्" (तै-उ-) इति श्रुत्या ब्रह्मस्वरूपतामाप्नोत्युपासकः। एतदेव ललिताम्बिकापदवाच्यम्—"ज्ञातृज्ञेयस्वरूपिणी" इत्युक्तः। एतयोरयं भेदः सगुणनिर्गुणरूपोऽपि नाममात्रमेव "द्वा सुपर्णा सयुजा सखाया" इति श्रुत्युक्तब्रह्मभेदवत् न तु परमार्थतः। श्रीराजराजेश्वरीललिताप्रतिपादकषोढापञ्च-दश्योरप्येवमेव भेदकल्पनेति वेदितव्यम्। अत्र मुक्तिर्नाम नापूर्वजननापेक्षा किन्तु स्वात्मनिष्ठाविद्यानिवर्तनरूपा। एवं नवावरणार्चनं ब्रह्मज्ञानसाधकम्। अत एवार्चनारम्भे क्रियमाणतत्त्वचतुष्टयाचमनमपीममेवार्थं निरूपयति।

अपि चान्तर्यागपरायणाः समयिनोऽप्येवं शिवयोर्मेलनमामनन्ति—श्रीदेवीं षट्त्रिंशत्तत्त्वरूपामिति च। तथा चोक्तम् श्रीगौडपादाचार्यैः—

"सहस्रारे पद्मे शिशिरमहसां बिम्बमपरं
तदेव श्रीचक्रं सरघमिति तद्बैन्दवमिति।
वदन्त्येके सन्तः परशिवपदे तत्त्वमिलिते
ततस्त्वं षट्त्रिंशा भवसि शिवयोर्मेलनवपुः॥"

(सुभगोदये २०) इति।

किञ्च-समयिनोऽपीत्यत्रापिशब्दस्त्वेतान् दक्षिणाचारभिन्नानिति दर्शयति। तादृशा अप्येवं मन्यन्त इति तात्पर्यम्। तद्भेदस्वरूपः किञ्चिदिव निरूप्यते—बहिर्यागरता दक्षिणाचारिणः। ते तावद्भूप्रस्ताराद्रिप्रस्तारत्रयं ताम्रादिकृत-श्रीचक्रस्योच्चभेदबोधकमिति मन्यन्ते—एते पुनः पूजायां मातृकासंयोजन-भेदबोधकमिति। उक्तं च सुभगोदये (२६)—

"इमा नित्या वर्णास्तव चरणसंमेलनवशा—

न्महामेरुस्तास्स्युर्मनुमिलनकैलासवपुषः ।
वशिन्याद्या एता अपि तव सबिन्द्वात्मकतया
मह्नीप्रस्तारोऽयं क्रम इति रहस्यं समयिनाम् ॥" इति ।

इत्याद्यास्सन्ति बाह्याभ्यन्तरपूजास्थानां मध्ये भेदाः । भूप्रस्तारादित्रितयपद्धकं ग्रन्थान्ते द्रष्टव्यमित्यलमतिविस्तरेण ।

अथ कृत्यं निरूपयति --

तदियं कापिलोद्दिष्टप्रकृतिर्नैव जातुचित् ।
किं पुनश्चिद्विशिष्टेति सेव्यैव[1] सततं बुधैः ॥ ५ ॥

अम्ब त्वदीयकरधारितलालिताङ्ग-
स्त्वच्चुम्बनेक्षणपदैर्लघु हासितस्सन् ।
पश्यन् मुखं तव पयो विधिपीतशेषं
पाम्यन् पदानि कतिचित्कलये भवानि ॥ ६ ॥

इति श्रीपरमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलविरुदावलीविराजमानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्षश्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-

---

(१) **सेव्यैव**—उपास्यैव । अत्रोपासनं पुनरस्मत्परमेष्ठिगुरु**श्रीबोधानन्दभारती**महास्वामिप्रणीत**श्रीचक्रार्चाविधानो**दितमार्गेणैव— न तु वामकौलादिमार्गेण—तत्र तथा प्रतिज्ञातत्वात् । अस्मदुक्तपूर्वस्य सर्वस्यापि तदनुबद्धत्वाच्च । तत्र तथा प्रतिज्ञातं यथा—"श्रीचक्रार्चाविधानं विशदमबहुलं सम्प्रदायानुसारं, तन्त्राणां संहितानामभिमतममलं वेदधर्माविरुद्धम् । **कल्याणानन्दनाथो**दितमनघमिदं भक्तसन्तारणार्हं, बुद्धा सम्यक् पराम्बापदपरिचरणे योऽभिसक्तस्स मुक्तः" इति ।

किञ्चैतत्समयमार्गानुबद्धमिति न सूचितं— "ध्यात्वा श्रीपरिपूर्णप्रकाशानन्दनाथमभयगुरुम् । लोपामुद्राम्बायुतमन्तर्मिहिरापनोदनं शान्तम् ॥" इत्युक्तः । अपि च— "महाराज्ञीकुलपद श्रीराज्ञीकुलेन वै । श्रीकल्याणानन्दनाथेन स्वशिष्याय प्रदर्शितम् ॥" इत्यनेनाधिकारिद्योतकेन (ग्रन्थेन) सन्ति वाममार्गाधिकारिणोऽपीति द्योतितम् । तथा चोक्तं हिमवन्तं प्रति देवीवचनं "बलिमांसादिपूजेयं विप्रवर्ज्या मयेरिता" इति ।

एतच्च—अस्य (श्रीचक्रार्चाविधानस्य) प्राशस्त्यं तावत् "सम्यग्बुद्ध्वा पराम्बापदपरिचरणे योऽभिसक्तः स मुक्तः" इत्युक्त्याऽभिद्योतितम् । अत्र सम्यग्बोधो नाम वक्ष्यमाण "मुक्त" इति फलद्योतकपदानुरक्तत्वेन अद्वैतज्ञानमिति वेदितव्यम् ।

## श्रीपरिपूर्णप्रकाशानन्द भारतीमहायतिकृतिषु विमर्शामृते मनोवैभवविमर्शो नाम चतुर्थबिन्दुः

### भूप्रस्तारादित्रयनिरूपणम्

| भूप्रस्तारः | कैलासप्रस्तारः | मेरुप्रस्तारः |
|---|---|---|
| अष्टदले | अष्टदले | अष्टकोणे |
| काद्यष्टवर्गाः | स्वरद्वन्द्वक्रमेण | स्वरद्वन्द्वक्रमेण |
| | षोडशस्वराः | षोडश स्वराः |
| मन्वश्रादिषु | | |
| आरोहक्रमेण | शेषं भूप्रस्तारवत् | अन्तर्दशारादिषु |
| कादयः | | कादयोऽवरोहक्रमेण |
| | | अष्टदले |
| | | काद्यष्टवर्णाः |
| | | षोडशदले |
| | | स्वराः षोडश |

| | | |
|---|---|---|
| अग्निकलाः | यादिक्षान्तम् | 10 |
| रविकलाः | कं भं इत्यादिस्पर्शवर्णाः | 12 |
| सोमकलाः | स्वराः | 16 |
| ब्रह्मकलाः | कचवर्गौ | 10 |
| विष्णुकलाः | टतवर्गौ | 10 |
| रुद्रकलाः | पादिशान्तम् | 10 |
| ईश्वरकलाः | षादिक्षान्तम् | 4 |
| सदाशिवकलाः | स्वराः | 16 |
| वारुणीकला | वं | 1 |
| हंस, प्रत, त्रियम्बक, तत् , विष्णुर्योनिम् | | 5 |
| इत्येवं चतुर्नवतिकलाः निरूपिताः | | 94 |

| | 1 | | 11 | 12 | 13 | 14 |
|---|---|---|---|---|---|---|
| | आवरण-सङ्ख्या | चक्र | बीजम् | स्थायी-भावः | रसाः | संयोज्य-वर्णाः |
| 1 | प्रथम | [illegible] | द्रां | रति | शृङ्गार | ब्राह्म्यादीनां दीर्घस्वराः |
| 2 | द्वितीय | पोणी | द्रीं | उत्साह | वीर | स्वराः |
| 3 | तृतीय | ३गी | क्लीं | शोक | करुण | काद्यष्टवर्गाः |
| 4 | चतुर्थ | [illegible] | ब्लूं | भय | भयानक | कादिढान्ताः |
| 5 | पञ्चम | बदिनी | सः | जुगुप्सा | बीभत्स | णादिभान्ताः |
| 6 | षष्ठ | अः | क्रों | क्रोध | रौद्र | मादिक्षान्ताः |
| 7 | सप्तम | [illegible] | ह्सख्फ्रें | हास्य | हास्य | स्वराद्यष्टवर्गाः |
| 8 | अष्टम | [illegible] | ह्सौः | विस्मय | अद्भुत | कूटत्रयम् |
| 9 | नवम | [illegible] | ऐं | शम | शान्त | पञ्चदशी |
| 10 | समष्टि | [illegible] | ह्स्रैं ह्सक्लीं ह्सौः | सर्वभाव | नवरस | सर्ववर्णाः |

श्रीः

# वातप्रक्रियाविमर्शो नाम पञ्चमबिन्दुः

## उपोद्घातः

आरोग्यं भास्करादिच्छेदित्युक्तेः परमार्थतः ।
यतस्स्यादायुरारोग्यं मुहुर्ध्यायति यद्द्विजः ॥ १ ॥
यज्ज्ञानान्मनुजोऽमर्त्यः स्याज्जगन्मङ्गलप्रदम् ।
त्रयीमयस्य यद्भर्गस्सावित्रं तद्धि धीमहि ॥ २ ॥

भो भो भिषङ्महोदयाः ! सभासदः ! सदसद्व्यक्तिहेतवो भवन्तः शृण्वन्तु मदीया इमा वाचोयुक्तीः । अस्मदीये भारते वर्षे सार्धचतुःसहस्रवर्षेभ्यः पुराऽभूत् विज्ञानसवितृमण्डलम् । तदस्मदीयभाग्यवशात्तदा कल्यादिमहाभारतसङ्ग्रामे द्रोणार्जुनादिवैज्ञानिकशिखामणिभिः साकमस्तमगात् । तदाद्यस्मद्देशीयानां क्रमवृद्धो दरिद्रान्धकारः तेन मुषिताश्च विज्ञानदृष्टयः । किन्तु अत्रास्तमितविज्ञानसवितृमण्डलं कालवशात्पाश्चात्यविद्वन्मनश्चन्द्रप्रतिबिम्बितमासीत् । अतस्तच्चन्द्रचन्द्रिकया अस्मद्देशीयसोदराणामुन्मीलयन्ते ज्ञाननेत्रकुमुदानि । अस्मद्देशीयसोदरेषु केचन इमां पाश्चात्यज्ञानचन्द्रिकां मूलप्रकृतिभूता इति मन्यन्ते । किन्त्वस्मदीयविज्ञानसवितृमण्डलप्रकाशमूर्च्छितेति नावगच्छन्ति । तद्यद्वा तद्वा भवतु ।

पाश्चात्यानामेतादृशज्ञानचन्द्रिकाप्रादुर्भावः कथमजनीति विचारिते तैरनिशं कृतः क्रियमाणश्च क्रियापूर्वकशास्त्रपरिशोधनात्मकव्यापार एव तच्चन्द्रिकाप्रादुर्भावकारणमिति विज्ञायते-तदस्माकमपि समानमिति चै । तादृशचन्द्रिकोन्मीलितेन चक्षुषा दृष्टेषु अस्मदीयार्षवैज्ञानिकग्रन्थेषु काश्चन स्फूर्तयः प्रतिभान्ति । तास्तावदस्मदीयदेशसोदराणां क्रियापूर्वकशास्त्रपरिशोधनकर्मकराणां कर्मवीराणां सहाया भूयासुरिति मत्वा मया कृतः **आयुर्वेदतत्त्वविवेका**भिधो ग्रन्थस्त्वान्ध्रभाषायाम् । अत्र मुख्यतया आयुर्वेदस्य तत्त्वभूतानां

(१) **परिशोधना**—Research.

दोषाख्यानां वातपित्तकफानां निरूपणं दरीदृश्यते तदनुरोधेन आर्यपाश्चात्य-विज्ञानयोः सादृश्यकल्पना च। किन्त्वस्य ग्रन्थस्य आङ्ग्लभाषामयत्वात् सोऽयं नायुर्वेदविद्वत्सार्वजनीनः। अतः पुनः तत्सारभूतं गीर्वाणभाषामयं ग्रन्थं प्रति अयमस्मत्परिश्रमः।

(इत्युपोद्घातः-ग्रन्थकर्ता)

आयुर्वेदो नाम आयुषो वेदनं यस्माद्भवतीति अर्थगत्या दीर्घं जिजीविषूणां तथाविधजीवनाय मध्ये समापतितानां दुःखजनकानां नानाविधामयानां शान्तये च अनुत्तमानुपायान् दर्शयच्छास्त्रम्। तथा चोक्तम् —

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥" इति।

एतच्छास्त्रं ब्रह्मादिस्तम्बपर्यन्तसृष्टिक्रमं विचार्यापि "यावदादेयं तावदादाय निवर्तते" इति न्यायेन स्वप्रवृत्तिरूपायाश्चिकित्सायाः सचेतनं पाञ्चभौतिकशरीरमात्रमूरीकरोति। उक्तं च **सुश्रुते**—"अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुषः इत्युच्यते तस्मिन् क्रियासोऽधिष्ठानम्" इति। तदेतच्छरीरमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयरूपपञ्चकोशात्मकम्। विना चेतनाधातुमवशिष्टं सर्वं जडमेव। जडस्यैव सम्पद्यन्ते यास्कोक्त-षड्भावविकाराः "जायते—अस्ति—वर्धते—परिणमते—अपक्षीयते—नश्यति" इति। अत्र वर्धत इत्यादिभावत्रयं पुनः शरीरस्थान्नमयकोशरचनायां क्रमेण कफ-वात-पित्तप्रक्रियाः स्मारयति। "वातपित्तश्लेष्माण एव देहसम्भव-हेतवः" इति सौश्रुतव्रणप्रश्नाध्यायवचनमपि एतदर्थमेवाटीकते। वातप्रक्रिया-विमर्शेनावशिष्टपित्तकफप्रक्रिययोः सुगमत्वादादौ वातप्रक्रिया विमृश्यते। यथा—वातो नाम "रूपरहितस्पर्शवान् वायुः, वृक्षादिकम्पनहेतुर्वायुः, शरीरान्तःसञ्चारी वायुः, प्राणश्च स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते" इति तार्किकोक्तदिशा अदृग्गोचरो वायुः स्थूलसूक्ष्मभेदेन द्विधा वर्तत

---

(१) **कफवातपित्तप्रक्रियाः**—anabolism, metabolism, catabolism.

(२) **वातप्रक्रिया**—the process of metabolism.

इत्यवगम्यते। तत्राद्यः स्थूलः [illegible]शरीरश्वासादिकार्येषु त्वगिन्द्रियप्रत्यक्षो वायुः[3] [illegible] । [illegible] सूक्ष्मः-सोऽन्तरशरीरे चेतनाधातुवाच्यः श्रोत्रादीन्द्रिय[illegible] । चेतना धातुर्नाम दहरान्तर्वर्ती ; वातपरमाणु-बुद्धि-चिदाभास-चितां चतुर्णां समुदाय एव । दहरं नाम पेशीकलाद्यवच्छिन्नाकाशभागः । "तत्रापि दहूं गगनं विशोकः" इति श्रुतेः । एतादृशदहरं महत्पदवाच्यं हृदयपुण्डरीकान्तर्वर्तीति श्रूयते हि—"दहूं विपापं परमेऽश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थम्" इति । तदन्तर्वर्तिनश्चेतनाधातोः मुख्यप्राणस्वरूपस्य सुखबोधायानावृतस्थलीस्थजलघटदृष्टान्तोऽनुसन्धेयः। यथा—विद्यन्तेऽत्र चत्वारो भागाः ; घटः – जलम् - जलप्रतिबिम्बिताकाशः—जलान्तःस्थिताकाशश्चेति । एते घटादयः क्रमेण चेतनाधातुस्थितवातपरमाण्वादीनां प्रतीका भवन्ति । यथा वातपरमाणोः घटः प्रतीकः—बुद्धेर्जलम्—चिदाभासस्य जलप्रतिबिम्बिताकाशः—चितः जलान्तःस्थाकाश इति। एतेन यथा घटमाश्रित्य स्थिते जले सर्वान्तर्यामिनो महाकाशस्य प्रतिबिम्बो दृश्यते तथा वायुपरमाणुमाश्रित्य स्थिते बुद्धितत्त्वे सर्वान्तर्यामिनः चितो दृश्यते चिदाभासनामा प्रतिबिम्ब इत्यर्थो झटित्यवगम्यते । अत्र वायुपरमाणु—बुद्धि—चिदाभासरूपमंशत्रयं कूटपदवाच्यं भवति; चतुर्थश्चिद्भागः आत्मपदवाच्यः कूटस्थः, तस्य सर्वान्तर्यामित्वात् "कूटस्थोऽक्षर उच्यते" इति स्मृतेश्च । एतच्चतुष्टयमेव चेतनाधातुपदेन व्यवहरन्ति चरकादयः । अत्र विद्यमानवायुपरमाणुस्तु पञ्चमहाभूतान्तःपातिनो बाह्यवायोरेवांशः । तथापि तस्य दहररूपयन्त्रनियन्त्रितत्वात् प्राणपदवाच्यत्वं सम्भवति चिज्जडात्मकमहच्छक्तिमत्त्वं च; नियन्त्रितजलबाष्पस्येव । चिज्जडशक्त्योर्विवृतिमग्रे वक्ष्यामः ।

अथ उक्तविधया नियन्त्रितवायोः (प्राणवायोः) बाह्यवायोश्च द्वयोर्वस्त्वभेदेऽपि महान् कर्मफलभेदो व्यावहारिकः ; जलबाष्प-यन्त्रितजलबाष्पयोरिव यथा वा पिप्पलीरसायनपिप्पल्योर्वस्त्वभेदेऽपि रसायनविधिनियन्त्रितायाः पुनः महान् कर्मफलभेदः व्यावहारिकस्तद्वत् । अतो वास्तवदृशा द्वयोर्वाय्वोरभेदः ; व्यवहारदृशा पुनः महान् भेदो दरीदृश्यते ।

(३) वायुः- wind.

उक्तदिशा सर्वशरीरे वर्तमानानां त्रिदोषप्रसादात्मकजीवपङ्कपूरितानां पुद्गलानां मध्यभागेषु क्षुद्रदहराणि विद्यन्ते। तेषामेकैकस्यान्तः एकैको वायुपरमाणुरनभिव्यक्तचित्प्रतिबिम्बवानस्ति प्राणसंज्ञः। अत्रास्य प्राणशक्तिमत्त्वं तु; क्षुद्रदहरकेन्द्रान्तर्गतजीवकणाख्यसूक्ष्मद्रव्यवशादुपपद्यते तद्वदेव सजीवं भवति-तदन्तरितं तु निर्जीवमिति परीक्षणेनाप्यभिव्यज्यते। जीवकणं नाम क्षुद्रदहरमध्यगतमतिक्षुद्रपरमाणुरूपं वस्त्विति गम्यते हि। तदेव चिदाविष्ट-वायुपरमाणुरिति ब्रूमः। एष एव सर्वचेष्टावहानां नाड्यादीनामधिष्ठाता। यतोऽत्र चित्प्रतिबिम्बो नाभिव्यज्यते सात्त्विकबुद्धितत्त्वाभावात्, अतोऽयं जड-शक्तिमान् भवति। यत्र सात्त्विकबुद्धितत्त्वं तत्र चित्प्रतिबिम्बाभिव्यक्तिः। मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्ध-आज्ञा-सहस्राराख्येषु सप्त-चक्रेषु क्रमेण पृथिव्यप्तेजोवाय्वाकाशमनस्सात्त्विकबुद्धितत्त्वानि निविष्टानि भवन्ति। सहस्रारे पुनः सात्त्विकबुद्धितत्त्वसद्भावात् तत्र चित्प्रतिबिम्बसद्भावः। अतः तत्रस्थप्राणः **सर्वज्ञानवहनाड्यादीनामधिष्ठाता चिच्छक्तिमान् भवति।** यदा पुनर्दहरं भिद्यते तदा प्राणहान्या मृतिरवश्यं भवतीति जीवपङ्कपरीक्षणेनायं विषयः स्फुटीभवति। क्षुद्रदहराणां कूटेषु पुनः मर्मसंज्ञा कृता। मर्मसु विशेषेण प्राणास्तिष्ठन्तीति सौश्रुतवचोऽपि उक्तार्थोपबृंहकमेव भवति। तादृश-मर्मवृतौ त्रिदोषप्रसादस्य जीवपङ्कसंज्ञितस्य वस्तुनः सत्त्वात् तत्प्रसादे यो दोषोऽधिकः तदनुरोधेन तन्मर्माभिधानं कृतम्। यथा वाताग्न्योरुत वातपित्त-योराधिक्ये सद्यः प्राणहरमिति; केवलवाताधिक्ये विशल्यघ्नमित्यादि। एतावता उक्तविषयाणां सम्यगालोचनेन वायुमहाभूत एव दहरनियन्त्रितश्चेत्प्राण इति तदभावे वातु इति चोपलक्षितो भवति।

---

(१) **जीवपङ्कम्**—protoplasm. (२) **पुद्गल**—cell. (३) **क्षुद्र-दहराणि**—nuclei. (४) **प्राणसंज्ञः**—nucleole संज्ञकवस्त्वेतमनुकरोति। (५) **जीवकण**—nucleole (a minute solid particle of the interior of the nucleus of cells) इति आङ्ग्लवैज्ञानिकोक्तदिशा क्षुद्रदहरान्तर्गतजीवपङ्कमध्य-(केन्द्र)वर्ती सूक्ष्मकणविशेष इति भावः। (६) **ज्ञानवहनाड्यः**—sensory nerves.

सोऽयं वायुमहाभूतः सप्तधा विभक्तः; पुनश्चैकैकः सप्तधा। अत एकोनपञ्चाशद्भेदा भवन्ति वायोः। एतेषां विवृतिर्वायुपुराणे द्रष्टव्या। पाश्चात्यमते जलवायु[1]–अग्निवायु[2]–शमीवाय्वादयो[3] एकादशसङ्ख्याका[4] एव विद्यन्ते। एकस्यैव वायुमहाभूतस्य कारणभूतानामाग्नेयाग्निपरमाणु-[5]आग्नेयजल-[6]परमाणु-इत्यादितैजसाणूनां सङ्ख्याभेदपूर्वकपाकवशादेव नानात्वापत्तिः। सैषा अणूत्पत्तिविधौ; पीलु[7]पिठर[8]पाकयोर्भेदावगतिपूर्वकमस्मदीयायुर्वेदतत्त्व-विवेके द्रष्टव्या।

उक्तार्थः भङ्ग्यन्तरेणोच्यते आङ्ग्लप्रकृतिविस्तृत्याख्येन —

आङ्ग्लप्रकृतयो[9] ऽष्टैकभूमिताः[10] क्रमसङ्ख्यया।
निबद्धा उदजन्याद्यास्तास्वशीत्या[11] तु पारदः[12]॥
एकद्विसप्तवस्वङ्कदिगत्यष्टिधृतीरिताः[13]।
षट्त्रिंशताब्धिबाणैश्च रसनागैश्च वायवः॥

---

(१) जलवायुः— hydrogen. (२) अग्निवायुः— oxygen. (३) शमीवायुः—nitrogen. एतयोरग्निशमीवाय्वोरुत्पत्तिरग्निहोत्रब्राह्मणे दर्शिता। यथा—"प्रजापतिरग्निमसृजत। सोऽबिभेत्प्र मा धक्ष्यतीति। तं शम्याऽशमयत्। तच्छम्यै शमित्वम्।" (तै. ब्रा. १ प्र - ३ अनु - आधानप्रकरणम्)।

(४) एकादशसङ्ख्याकाः—(1) *Hydrogen* H–1 (2) *Helium* He–2 (3) *Nitrogen* N–7 (4) *Oxygen* O–8 (5) *Flourine* F–9 (6) *Neon* Ne–10 (7) *Chlorine* C–17 (8) *Argon* A–18 (9) *Krypton* Kr–36 (10) *Xenon* Xe–54 (11) *Radon* (*Niton*) Rn–86

(५) आग्नेयाग्नि—electron. (६) आग्नेयजल—proton.

(७) पीलु—atom. (८) पिठर—molecule.

(९) आङ्ग्लप्रकृतयः—elements. (१०) अष्टैकभूमिताः—118.

(११) उदजनि—hydrogen. (१२) पारदः—mercury.

(१३) एक—1 द्वि—2 सप्त—7 वसु—8 अङ्क—9 दिक्—10 अत्यष्टि—17 धृति—18 षट्त्रिंशत्—36 अब्धिबाणैः—54 रसनागैः—86 एतैरङ्कैः क्रमेणोदजन्याद्या एकादशवायवो ज्ञेयाः।

ताम्रमङ्ककरैस्तद्द्रव्यं सप्ताब्धिभिः स्मृतम् ।
स्याद्दिव्यरजतं नागसप्तभिः स्वर्णमुत्तरैः ॥
द्व्यशीत्या नागराजं च नागनागैः शुकाञ्जनम् ।
एतत्क्रमाङ्कैर्ज्ञेयास्स्युरणुगर्भाम्बुवह्नयः ॥

अथ चिज्जडशक्ती निरूप्येते । यथा -- विद्युदाविष्टमय एव अयस्कान्तं भवति तथा बुद्ध्याविष्टवातपरमाणुः प्राणो भवति चित्सन्निधानात् । तस्य स्थानं हृत्पुण्डरीकान्तर्वर्ति दहरमेव हि । अत्रायं रविवद्भवति स्वतन्त्रशक्तिमत्त्वात (स्वतन्त्रकान्तिमान् खलु रविः) । सोऽसौ मुख्यप्राणः । एतस्यैव शक्तिर्मूर्च्छिता सहस्रारसंस्थिते सात्त्विकबुद्धिविशिष्टनाडीकूटे चन्द्रवत्प्रतिभाति

(१) **अङ्ककरैः**—29 (२ **सप्ताब्धिभिः**—47
(३) **दिव्यरजतम्**—platinum (४) **नागसप्तभिः**—78
(५) **उत्तरैः**—नागसप्तानामुत्तरैः अङ्कैः—76 (६) **द्व्यशीत्या**—82
(७) **नागराजम्**—lead अस्य वासुकिवीर्यत्वादेतन्नाम उपपद्यते ।

(८) **नागनागः**—88 (९) **शुकाञ्जनम्**—दिव्यकाञ्चनम्—radium--इदं बहुधनव्ययप्रयासेन **रविरश्मिभ्यः** समाहृतम् पुरा अशीतिवर्षेभ्यः कुरुवर्षीयादिभिः (Americans प्रभृतिभिः) षोडशयव (16 grains) परिमितमिति प्रतीयते वैज्ञानिकचारित्रैः । एतेनास्य (radium) धातोः रविरश्मिजन्यत्वेन दिव्यत्वम्—ब्रह्माण्डव्यापृतत्वं चोपपन्नम्—ब्रह्माण्डपरिमितिकथने “खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः (18712080864000000) । ब्रह्माण्डसंपुटपरिभ्रमणं समन्ताद्दाभ्यन्तरे दिनकरस्य करप्रसारः॥” इति **कालमानोपपत्तिः** (पुट-४६, ४७) द्रष्टव्या ।

ननु दिनकरकरप्रसारापेक्षया ब्रह्माण्डकक्षाया अतिविस्तृतत्वात्तत्र तत्प्रसरणं कथमुपपद्यत इति चेन्नायं दोषः । ब्रह्माण्डकक्षा तावत्सङ्कर्षणं प्रदक्षिणीकुर्वाणस्य कक्षैव हि प्रद्युम्नस्य—तत्प्रदक्षिणीकुर्वाणत्वेन दिनकरस्य तत्करप्रसरणं तावत्तत्कक्षायामेव न हि सर्वत्र ब्रह्माण्डे । तथा चोक्तम्—“ब्रह्माण्डं संवृतं येन” (**रसरत्नसमुच्चयम्**) इत्येतेनास्य संवृतत्वमात्रमुक्तं भवति न व्यापृतत्वम् । अतोऽत्र न दोषावकाशः । अपि चोक्तमस्य ब्रह्माण्डव्यापृतत्वं लक्षणत्वेन **रसतन्त्रे** स्वर्णविभजनप्रस्तावे प्राकृतसुवर्णस्य “ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु” (**रसरत्नसमुच्चयम्**) इति । अतः प्राकृतसुवर्णं नाम दिव्यकाञ्चनं (radium) इति सिद्धम् । इदमन्धकारे दीपवत्प्रतिभाति ।

(१०) **अणुगर्भाम्बुवह्नयः**—तत्तत्प्रकृतिपरमाणुगर्भस्थितजलाग्न्यंशाः (proton-electron) संज्ञकाः । एते तत्तत्प्रकृतिकनसङ्ख्यापरिमितास्स्युरिति भावः ।

(चन्द्रस्तु प्रदीप्यते खलु रविभासा) चिच्छक्तिसंज्ञिता च भवति। तदितर-क्षुद्रप्राणेषु विद्यमाना जडशक्त्यभिधा च; तेषु तामसबुद्धेरसत्त्वात्। चिज्जड-शक्त्योरियानेव भेदः। इममेवार्थं "वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणा-न्येवैकादशेन्द्रियाण्युत्पद्यन्ते" इत्यादिसौश्रुतवचनमुद्घोषयति। अन्ये क्षुद्रप्राणाः पुद्गलदहरान्तर्वर्तिनः। पुद्गलदहराणि नाम शरीरक्षुद्रावयवभूतानां पुद्गलनाम-कानां मध्यभागेषु केन्द्रभूतानि क्षुद्राकाशभागरूपाण्येव। तेषां क्षुद्रत्वात् तत्रस्थप्राणानामपि क्षुद्रत्वम्। तादृशक्षुद्रदहराणां मध्ये वर्तमानानां क्षुद्र-प्राणानाम् (जीवकणानाम्) आत्मप्रतिबिम्बवत्त्वात् तेषामुपास्यत्वमुपनिषदुपदि-शति। यथा—"अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवः स्रवेत्" इत्यारभ्य "अस्य यदेकाम्रं शाखां जीवो जहाति अथ सा शुष्यति जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति "स य एषोऽणिमैत-दात्म्यमिदँ सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो।" (छा-६-११) इति।

आत्मा तावत्सर्वान्तर्याम्यपि दहरान्तर्नियमितप्राणवाताकाराकारितस्सन् निर्वातकाचगोलान्तरे धातुविशेषाश्रितविद्युत्कणः प्रकाशमिव चित्कार्यम् (चिज्जडशक्तिमच्चैतन्यं) व्यनक्ति। दीपगोले धातुविशेषस्येवात्र वायुधातो-र्मुख्योपकरणत्वात् तस्य प्राधान्यम्। तथा च श्रूयते "नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि" इत्यादि। अत एव वायुः शरीरे सूक्ष्मतमः शारीरदोषत्रया-न्तर्गतवातस्य प्रसादरूपः प्राणः; शरीरे दृश्यमानापानादिरूपस्तु स्थूलः किट्टरूपः। एवं द्विविधोऽपि वायुः अशितपीताभ्यामेव सम्भवति। तथा चोक्तम् "तत्राहारप्रसादाख्यो रसः—किट्टं च मलाख्यमभिनिर्वर्तते। किट्टात् स्वेद-मूत्र-पुरीष-वात-पित्त-श्लेष्माणः पुष्यन्ति; पुष्यन्ति त्वाहारप्रसादात् रस-रुधिर-मांस-मेदो-अस्थि-मज्जा-शुक्र-ओजांसि पञ्चेन्द्रियद्रव्याणि धातु-प्रसादसंज्ञकानि" (चरक-सूत्रस्थान २८-४) इत्यादि।

अपि च छान्दोग्योपनिषदि अशितपीतयोरन्नपानयोः पुनः त्रैविध्यं दर्शितम्। यथा—"अन्नमशितं त्रेधा विधीयते—तस्य यत्स्थविष्ठो धातुः

---

(१) धातुविशेषः—tungsten.

पुरीषं भवति-यो मध्यमस्तन्मांसम्-योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते—तासां यत् स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितम्—योऽणिष्ठः स प्राणः" (छा. ६-५) इति। अत्रोपनिषदुदितमध्याणिष्ठभागौ चरकोक्तप्रसादभाग एवान्तर्भूतौ।

एतादृशमहिम्नो वायोः स्तुतिः वायोर्विदाख्यराजर्षिकृता दृश्यते **वातकलाकलीये**। एतादृशस्तुत्या भिषग्विद्यायां किं प्रयोजनमित्याशङ्कयोत्तरं दत्तं तत्रैव वस्तुस्वरूपविज्ञानं कार्यसाधने सम्यगुपचरतीति। युक्तं चैतत्।

उत्खातिनीति विज्ञाय भुवि सञ्चरतः पदम्।
न स्खलत्यपरिज्ञाते कटिभङ्गादि सम्भवेत्॥

अस्त्येवमेव दोषस्वरूपस्वभावविज्ञाने प्रयोजनम्।

**इति श्रीवैद्यवल्लभ-**
**राज्ञीवेङ्कटाचलपतिप्रसादमहाग्निचित्कृतिषु**
विमर्शामृते वातप्रक्रियाविमर्शो नाम
पञ्चमबिन्दुः

श्रीः

# आकाशविमर्शो नाम षष्ठो बिन्दुः

अत्र प्रथमं पूर्वपक्षमुद्घाटयति—भो विद्वन्! "आकाशशरीरं ब्रह्म" इति श्रुतेः परब्रह्मशरीरत्वमाकाशस्य। अतः सन्त्यत्र खलु ब्रह्मलक्षणान्यच्छेद्य-त्वादीनि चित्त्वं विना। स्मर तावदेकत्राकाशे अस्ति घट इति—तेन तत्राकाशोऽवच्छिन्न एव भवति। तत्रान्यवस्त्वनवधानात्। तादृशानवधानं तावत् तत्राकाशाभावादेव हि। तथा च दृश्यते—जलमग्नन्युब्जकाचपात्रे जलाननुप्रवेशः—तत्पात्रगर्भे वायोरस्तित्वात्। तदस्तित्वं तु तदा यदि कृतं छिद्रं पात्रपृष्ठे तद्द्वारा पात्रगर्भस्थवायुर्बहिरायातीति विज्ञायते त्वाच-प्रत्यक्षदर्शनात्-तदा तत्पात्रे मन्दं मन्दं जलाधिरोहणाच्च। एतेन पात्रगर्भे प्रथमं वायुना तदपगमानुरोधाज्जलेन चापहृत आकाश इति प्रतीयते। तादृशा-पहरणयोग्यत्वेन तस्य नाच्छेद्यत्वादयः संगच्छन्ते। अतस्तेषां कथं लक्षणत्वा-वगतिरिति चेन्नायं दोषः, तस्य निरवयवत्वात्। तद्यथा—आकाशवददृश्योऽपि वायुर्घटे निरुद्धोऽन्यत्र नेतुं शक्यः न तथा आकाशः। किन्त्वाकाशे घटो नीयते-तदा घटमात्रं नीयते—तदवच्छिन्नाकाशस्तु तत्र तत्रैवावस्थास्यति न पुनर्वायु-वन्नेतुं शक्यः—निरवयवत्वादित्युक्तहेतोः। तस्मादच्छेद्यत्वादीनां लक्षणत्वमुप-पद्यत एव (आकाशविषये)। वायुजलाभ्यामुक्तपूर्वापहरणं तु स्वस्वावस्थितिमात्र-द्योतिताधाराधेयसम्बन्धमात्रं निरूपयत्याकाशतच्छिन्नयोरिति वेदितव्यम्। तथा च श्रूयते -"सर्वमित्याकाशे" (तै-उ) इति। न खल्वाधारापहरणं कुरुते सर्वत्राधेयवस्तु—अत उक्तापहरणमाभासमात्रमेव। एतादृशाभासापहरण-क्रियया मूलवस्तु तावन्नापह्रियते। किन्तु तथैवावशिष्यते पूर्णभागहारक्रियायां पूर्णमिवेति श्रुतिर्विदधाति—

(१) अच्छेद्यत्वादीनि :—"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥" (भ-गी. २-२४) इत्युक्ताच्छेद्य-त्वादीनीत्यर्थः।

"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥"

(छान्दोग्यम्) इति । एतन्मन्त्रविवृतिरस्मदीय-भाष्यमुक्ताफले द्रष्टव्या-श्रीपूज्यपादशङ्करभाष्यसहिता । एतावता ब्रह्मशरीरत्वमाकाशस्योपपन्नम् । अतस्तत्प्रतीक 'पूर्ण' पर्यायत्वेन आकाशवाचक-शून्य-ख-आदयः शब्दाः प्रयुज्यन्ते "शून्ये गुणके जाते खंहारश्चेत्पुनस्तदा राशिरविकृत एव ज्ञेयः" (शून्यपरिकर्माष्टकम्—लीलावती) इत्यादिस्थलेषु । अतः पूर्ण नाम गगनं ब्रह्मशरीरमिति यावत् । अत एवास्मदीयभाष्यमुक्ताफले ब्रह्मदृष्टान्तत्वेनोपयुक्तं गणितशास्त्रीयपूर्णम्[1] । तस्य 'आकाशं गगनं शून्यम्' इति पर्यायपददर्शनाच्च ।

किञ्च उक्तापहरणमाभासमात्रमेव इति यदुक्तं तत्रोच्यते न ह्येतदपहरणं वास्तवम्—आभासमात्रमित्युक्तत्वात् । यथा पूर्णात्पूर्णोद्धरणेऽपि पूर्णमवशिष्यत एव—तथा आकाशस्थवस्त्वपगमे तत्राकाशोऽवशिष्यते न वस्तुना साकं गच्छति सङ्ख्याभाजकेन साकं सङ्ख्याभाज्यावयव इव । अतस्सर्वमपि जगत् नाम-रूपात्मकम् आकाशे तत्सत्तयैवावभासते न स्वतःसत्तया, मृत्सत्तया मृदि घटवत्—आकाशाभावे जगद्भानाभावात् । एतद्विज्ञानेन ब्रह्मभूयाय कल्पते जीवः । तथा च श्रूयते "सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति" (तै-उ) इत्यादि । अतो ब्रह्मशरीरमाकाश इति विदित्वा "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतेः ; **नृसिंहसाङ्ख्यदर्शन-भाष्यमुक्ताफला**दिगणित(साङ्ख्य)वेदान्त-दिशा निश्चित(अस्खालित्य)ज्ञानवांश्च भूत्वा मुक्तो भूयाज्जीव इत्याशास्महे ।

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते आकाशविमर्शो नाम
षष्ठो बिन्दुः

---

(१) पूर्णं. शून्यं—zero.

श्रीः

# पूर्णापदार्थो नाम सप्तमबिन्दुः

## प्रथमः कल्पः

पूर्णपदस्य शून्यमित्यर्थोऽस्मदीयवेदवेदाङ्गेषु यत्र कुत्रचित् वर्तते वा न वेति सन्दिहानानां पण्डितप्रकाण्डानां विचिकित्सावारणायायमुपक्रमः ।

> वृद्ध्यादैजित्यर्थयुग्मे वृद्धिर्युक्तो यथा तथा ।
> ब्रह्मबिन्द्वर्थयोः पूर्णं स्याद्भाषापरिभाषयोः ॥

किञ्च —

"पूर्णा पश्चात्" इति मन्त्रगतपूर्णापदं शून्यं (बिन्दुं) बोधयति । यथा—यद्यपि भाष्यकारैः (श्रीविद्यारण्यैः) "पौर्णमासी जिगाय" इत्यत्र मन्त्रखण्डे 'पौर्णमासी' इति मन्त्रलिङ्गं 'जिगाय' इति पदेन जैत्रीत्वं चावेक्ष्य यज्ञवेदेः पुरस्तात्पश्चाच्च पौर्णमास्यभिमानिदेवता पूर्णपदवाच्या वर्तत इति 'पूर्णा पश्चात्' इति मन्त्रार्थो वर्णितः ; तथापि वक्ष्यमाणार्थस्य तदविरोधित्वात् सोपपत्तिकत्वाच्च तद्ग्राह्यमेव, ब्राह्मणानुवादेन च अमायाः ज्यैष्ठ्यसंपादनद्वारा तस्य तत्फल (पुरः पश्चात्पूर्णावस्थित्या यत्पूर्णिमायाः जैत्रीत्वरूपं यत् तत्फल)साधकत्वाच्च । अमायास्तावत्पूर्णिमाजनकत्वप्रसक्तेः पौर्णमास्यभिमानिदेवतापेक्षया तज्जनकस्य बलाधिकत्वात् तादृशवस्तुनैवाभिरक्षणं (पुरस्तात् पश्चाच्च रक्षणम्) जैत्रीत्वहेतुत्वेन संपद्यते ; अत उच्यते पूर्णा नाम अमावास्येति । यतः पौर्णमास्याः वसुरूपकलामयत्वात् तादृशकलानामुत्पत्तिलयौ अमावास्यातः सम्भवतः तस्मात्पूर्णिमाया उपादानममावास्येति विज्ञायते "यद्यस्मात्प्रभवति यस्मिंश्च प्रविलीयते तत्तस्योपादानं प्रसिद्धम्" (ब्र-सू-भा-१-४-२५ इति शाङ्करोक्तेः ।)

---

(१) शून्यम्—zero.

किञ्च ; यथा सूर्यादिग्रहकक्षास्थितोच्चदेवताग्रहान् (सूर्यादीन्) नीचाभिमुखं चोदयन्ती नीचावधि-पश्चादाकर्षति स्वाभिमुखम् तथेयममावास्याधिदेवता शुक्लपक्षे पूर्णिमावधि चन्द्रबिम्बे कलारूपान् वसून् निवेशयन्ती तं (चन्द्रबिम्बम्) चोदयति। पश्चात्कृष्णपक्षे स्वाभिमुखं तमाकर्षन्ती तद्गतकलासङ्क्रमणं करोति। स्वात्मनि कलालयं करोतीति भावः। तथा च श्रूयते—"निवेशनी संगमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती" (तै-सं-३-५-१) इत्येवं व्यक्तकलाः पञ्चदशापि उदयास्तमयौ (विकासमुकुलीभावौ) वाप्नुवन्ति। षोडशी ध्रुवा महाकला सादाख्या पुनरव्यक्ता नित्या पूर्णैव। पूर्णस्यापि (शून्यापरनामकबिन्दोः) सङ्ख्यासु गणनावशादेव कलात्वसिद्धिः न तु सावयवत्वतः। नास्ति हि कलानामिव सावयवत्वं पूर्णस्य (शून्यपदवाच्यस्य)।

पूर्णस्य सङ्ख्यासु गणना यथा—दर्शपूर्णमासेष्ट्योरुभयोरपि "इमामूर्जं पञ्चदशीं ये प्रविष्टाः" इति पञ्चदशीत्वनिर्देशात् शुक्लकृष्णपक्षयोरुभयोरपि तिथीनां पुनः पञ्चदशीत्वप्रसिद्धेः। एककलायुतायास्तिथेः प्रतिपदितिद्वियुताया द्वितीयेति—त्रियुतायास्तृतीयेति एवं पञ्चदश कलायुतायाः पञ्चदशीति (पूर्णिमा उत अमावास्येति) एवं कलासङ्ख्याभेदेन तिथिभेदोपपत्तेश्च प्रतिपक्षस्य पञ्चदशकला वर्तन्त इत्यवश्यं वक्तव्यम्। तथा सति शुक्लपक्षप्रतिपदारभ्य एकैककलावृद्ध्या पञ्चदश्यां पूर्णिमायां पञ्चदशकलाः संदृश्यन्ते। कृष्णपक्षेऽप्येवं पञ्चदशावश्यं दर्शनीयाः, प्रदर्श्यन्ते यथा—कृष्णप्रतिपदि चतुर्दशैव कला विद्यन्ते-कृष्णद्वितीयायां त्रयोदश—कृष्णतृतीयायां द्वादश—एवमेकैककलापगमेन कृष्णचतुर्दश्यामेकैव कलावशिष्यते। तस्याप्यपगमे अमायाम् किमवशिष्यते? शून्यापरनामकबिन्दुरेवावशिष्यते—तदेव खलु पूर्णम्। एवं शून्यबिन्दोः (पूर्णस्य) सङ्ख्यासु गणना सिद्धा। नास्य पूर्णस्यतिथिजीवभूतकलाव्यपदेशेन पूर्णेति रूपसिद्धिर्वाच्यलिङ्गवशात्। तद्व्यपदेशाभावे तिथिनिष्पत्त्यभावः। अतस्तद्व्यपदेशोऽवश्यंभावी। तथापि कलानामिव तस्या (पूर्णाया) वृद्धिह्रासौ न भवतः अपि तु "न वर्धते कर्मणा नो कनीयान्" (बृ-आ-६-४-२३) इति श्रुत्युक्तलक्षणलक्षितब्रह्मण इव ध्रुवात्वमस्ति।

एवं पूर्णा नाम अमावास्या कलेति सिद्धं लक्षणया अमावास्येति च। उक्तार्थस्सङ्क्षिप्योच्यते श्लोकभङ्ग्या—

शून्यादेकैकशो वृद्धिर्वसूनां पूर्णिमावधि।
तथा च ह्रसिमाऽमान्ते पूर्णाऽतस्सा[1] द्विलक्षणा[2]॥
एवं पञ्चदशांशैस्तु कलावृद्धिक्षयौ—ततः।
[3]इमामित्यादिना पञ्चदशीत्वं पूर्णिमाऽमयोः॥

सेयममावास्या कृष्णपक्षनिष्ठतिथिसापेक्षया पञ्चदश्यपि पूर्णिमापेक्षया तु षोडशी भवति। अत इयं षोडशी कलेति व्यवह्रियते। न हि सन्ति कलाः षोडश, किन्तु पञ्चदशैव चन्द्रविद्यायाम्। अतः षोडशी कला पृथगस्तीति न भ्रमितव्यम्। यथा एकमेव ब्रह्म प्रकृतिब्रह्मरूपेण द्वैतमिव भासते तथेयमपि पञ्चदशी (पूर्णिमा) षोडशी (अमा) भेदेन द्विधा भासते। अत एतेनाद्वैत-सिद्धिर्भवति।

मन्त्रशास्त्रेऽप्यस्त्यस्याः परा भट्टारिका षोडशी महानित्येति व्यवहारः। एतया अमावास्याधिष्ठात्र्या षोडश्या कलया अमायां रात्रौ सोमो (महाकामेश्वररूपः) रमत इति श्रूयते—"सोऽमावास्याँ रात्रिमेतया षोडश्याकलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते" (बृ. आ. १-५-१४ काल-माधवीयम् १८२ पुटम्) इति। एवममायाः शून्यापरनामकबिन्दुरूपायाः पूर्णापदवाच्यत्वं सिद्धम्। अतः पूर्णा नाम शून्यापरनामकबिन्दुरिति च। तथा च सोमवृद्धवसिष्ठपितामहादिसिद्धान्तेषु अपि दरीदृश्यते। एवं पूर्णा-पदवाच्याभ्यां पुरःपश्चादवस्थिताभ्याममावास्याभ्यां मस्यते (परिमीयते) इति पौर्णमासीति रूपसिद्धिरिति सुशकम्।

---

(१) सा--अमा। (२) द्विलक्षणा = शून्य-पूर्ण-लक्षणद्वयवती। शून्यस्य निरवयवत्वात्पूर्णत्वं चोपपन्नं--अतः पूर्णा नाम अमावास्येत्यर्थः।

(३) इमामित्यादिना--इमामित्यादिमन्त्रेण। मन्त्रो यथा—"इमामूर्जं पञ्च-दशीं ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः। अग्निर्हव्यवाडिह तानावहतु पौर्णमासँ हविरिदमेषां मयि। यथालिङ्गमाहवनीयेऽन्वाधीयमाने जपति" इति। $\frac{\text{पौर्णमासँ}}{\text{आमावास्यं}}$

किञ्च पुरःपश्चादवस्थितयोः पूर्णिमाजनकयोरमावास्ययोर्बलादेव पूर्णिमाया जैत्रीत्वं चोपपद्यते—"पितेव पुत्रमभिरक्षतादिमम्" इति मन्त्रवर्णात्। इममेवार्थं बोधयति 'पूर्णा पश्चात्' इति मन्त्रः। लोके च पूर्णिमायाः पुरः पश्चाच्चामावास्यावस्थितिः प्रसिद्धैव।

इति प्रथमः कल्पः

## अथ द्वितीयः कल्पः

पूर्णापदस्य शून्यमित्यर्थोऽवगम्यते "पूर्णा पश्चादुत पूर्णा पुरस्तात्। उन्मध्यतः पौर्णमासी जिगाय" इत्येतन्मन्त्रार्थविचारणेन—

यथा—पूर्णाभ्याम् (अमावास्याभ्याम्) पुरस्तात् पश्चादवस्थिताभ्यां मस्यते परिमीयत इति पौर्णमासीति रूपसिद्धेः पूर्णा नामामावास्येत्यवगन्तव्या अमावास्ययोर्मध्येऽवस्थानप्रसिद्धिरपि पौर्णमास्याः। किञ्च एष मन्त्रस्सारस्वत इति—सरस्वती नामामावास्येति च श्रूयते हि—"सारस्वतौ होमौ" "अमावास्या वै सरस्वती" इति श्रुतिभ्याम्। एतेनायं (मन्त्रः) अमावास्याविषयतां प्रतिपादयतीति ज्ञायते। तस्मात्पूर्वोक्तपौर्णमासीपदरूपसिद्धिरुपपन्ना। अतः पूर्णा नामामावास्येत्यर्थः।

अथ अमावास्या नाम शून्यम् इत्यर्थो यद्यवगम्यते तदा पूर्णं नाम शून्यमित्यर्थः स्वयंपतिष्णुः। किन्तु तदवगमनं कथमिति चेदुच्यते—

यन्निरवयवं तत्पूर्णमुत शून्यं ब्रह्मवत्, सावयवस्य पूर्णशून्यत्वयोरनुपपत्तेरिति पूर्णशून्यपदे निरुच्येते। ब्रह्मणः पूर्णत्वम् "पूर्णमद" इति मन्त्रभाष्ये—शून्यत्वं पुनः "असद्वा इदमग्र आसीत्" इति मन्त्रभाष्ये च प्रसिद्धमेव हि। अतः पूर्णं उत शून्यं नाम निरवयवमिति सिद्धम्। अत्रामावास्यायाः कलाप्रवृत्तिसमाप्त्योः सन्धाववस्थितायाः कुहूकालमात्रस्वरूपायाः कलारूपावयवशून्यत्वात् शून्यत्वम्—निरवयवत्वम्—अत एव पूर्णत्वं चोपपन्नम्। एतेन पूर्णं (पूर्णा) नाम कलाशून्यं बिन्दुमात्रावस्थानमेव अमावास्येति सिद्धम्। एवमेवान्येष्वपि निरवयवं शून्यं पूर्णपदवाच्यं भवति।

ननु अमावास्यापरिमितेर्मध्यममानेन किञ्चिदूनाधिकषष्टिघटिकापरि-माणत्वे कुहूकालपरिमितत्वं कथमुपपन्नमिति चेदुच्यते—अत्रामावास्यायाः कुहू-कालपरिमितत्वं सन्धिरूपाया एव न तु तिथिगणितायाः। तस्याः पुनः षष्टिघटिकाप्रमाणत्वम्—"सन्धौ यजेत" इत्यत्र सन्धिमभितो यजेतेतिवदुप-पद्यते। एतत्कुहूकालपरिमितामावास्यायामव्यक्तैव विद्यते कला। सैव षोडशी—ध्रुवा—महाकलेति च श्रूयते बृहदारण्यके (१-५-१४)। अस्याधि-ष्ठात्री महात्रिपुरसुन्दरी इति मन्त्रशास्त्रे प्रसिद्धम्।

**इति द्वितीयः कल्पः**

## इति श्रीवैद्यवल्लभ-
## राज्ञीवेङ्कटाचलपतिप्रसादमहाग्निचिदयज्वकृतिषु
विमर्शामृते पूर्णपदार्थो नाम

सप्तमबिन्दुः

श्रीः

# निन्दापवादो नाम अष्टमबिन्दुः

न निन्दति क्वचिद्वेदो यत्किञ्चिदपि वस्त्वहो।
नमश्श्वभ्याय चेत्याद्दिवचनैरुत नन्दति ॥ १ ॥

एतच्च —

स्तौति मानुषदेहस्य प्रयोजनमपीदृशम्[2]।
इत्याद्यथोपासनां तदुपस्थे विदधाति च ॥ २ ॥
[3]तत्प्रतिष्ठेत्पयुासीतेत्यादिना तादृशं वपुः।
कथं न्यक्कारं दिव्यभाववद्विदुषां मते ॥ ३ ॥
पशुभावदृशां तावत्स्यादेषा न्यङ्कृतिर्मनो।
तद्बुद्धौ ब्रह्मभिन्नं च वस्त्वन्यत्परिदृश्यते ॥ ४ ॥
तदासौ द्वैतपाशेन बद्धोऽतः पशुभाववान्।
दिव्यभावेन यः पश्येदैक्यं तु जगदात्मनोः ॥ ५ ॥
मृद्धटैक्यमिवान्योऽसौ द्वैतपाशाद्विमुच्यते।
मृत्सत्ताऽभिन्नसत्ताको घटस्तस्मात्तदैक्यता ॥ ६ ॥

यथा —

वाचारम्भणमित्यादि श्रुत्या मृद्घटयोः पृथक्।
दर्शिते वस्त्ववस्तुत्वे तस्मादैक्यं तयोर्ध्रुवम् ॥ ७ ॥

अस्यायमर्थः—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा-उ. ६-२-४) इति श्रुत्या वस्तुनो नामरूपे वागारम्भणमात्रे भवतः न तु

---

(१) **इत्यादिवचनैः**—"श्वभ्यः श्वपतिभ्यश्च वो नमः" इत्यादिनमकपाठः।

(२) **ईदृशम्**—"शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्।" (तै-उ-शीक्षावल्ली) इत्यादि।

(३) **तत्प्रतिष्ठेत्युपासीत**—"अथ दैवीः प्रजातिरमृतमानन्द इत्युपस्थे। तत्प्रतिष्ठेत्युपासीत" (तै-उ)।

पारमार्थिके-तयोरवस्तुत्वात् वस्तुतः मृदः पृथक्कर्तुमशक्यत्वाच्च। यथा मृदि समुत्पादितो घटः घटशब्दतदाकृतिभ्यां व्यवहृतोऽपि कार्येषु (जलाहरणादिषु) अशक्यं भवति मृद्रूपवस्तुतः पृथक्कर्तुम्। श्रूयतामुदाहरणम्—

पान्थावासाते रामकृष्णौ। तावेकत्र समाविष्टौ। अन्योन्यं भावितौ च स्नेहभावेन। अथ संप्रेप्सतोः पाकं घटीचिन्तानुकल्पिता। तदा रामोऽवदन्मन्दं मृदस्तीति मदन्तिके। कृष्णस्तु कुर्वे घटमिति च। तेन (कृष्णेन) निर्वर्तितश्च घटः पाकोऽपि। तौ समं भुक्तवन्तौ। यत्किञ्चिद्धेतुना पश्चात्स्पर्धमानौ परस्परम्। मन्मृदं मम देहीति रामेण कलहः कृतः। अभियोगश्च, कृष्णोऽथ प्राड्विवाकेनाहूतो विचारितश्च। अथावदत् प्राड्विवाकः मृदधिकारी राम इति, अतस्तत्तस्मै दीयतामिति च। तदा बभाण कृष्णस्तु तत्रास्ते मत्कृतो घटः इति। तदाक्षदर्शकोऽप्याह गृहाण तावत् त्वत्कृतं घटमिति। तदा तद्घटमादातुं कृष्णेन किमु शक्यते? न हि शक्यं भवति। अतो व्यवहारोपयुक्तो घटः प्रत्यक्षपाकादिकार्यकरणमपि न हि पृथक्कर्तुं शक्यते मृद्वस्तुनः; तस्य (घटस्य) अवस्तुत्वात्। वस्तुत्वं नाम स्वतःसत्ताविशिष्टत्वम्। एवमेव प्रत्यक्षमपि (व्यवहारयोग्यपि) जगत्-ब्रह्मणः पृथक्कर्तुमशक्यं भवति स्वतःसत्ताऽभावात्। यद्यस्ति वस्तुत्वं जगति तदा रामकृष्णसम्बन्धिनोः रज्जुघटयोर्योगेन कूपाज्जलमुद्धृत्य पश्चाद्विवदमानयो रामकृष्णयोः स्वं स्वं रज्जुं घटं च शक्यं ताभ्यामादातुम्। न तथा शक्यते पृथक्कर्तुं जगद् ब्रह्मणः किन्तु सदात्मना भवितुं शक्यम् जगत्, तस्य (जगतः) ब्रह्मसत्ताऽभिन्नसत्ताकत्वात्। अत एवोक्तं श्रीमद्भाष्यकारैः (शङ्कराचार्यैः) "सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं-स्वतस्त्वनृतमेव" इति।

एतेन यथा मृद्घटैक्यम् तथा ब्रह्मजगदैक्यं दिव्यभावदृशा सिद्ध्यति, न पशुभावदृशेति श्लोकार्थः।

ननु "यो वाऽयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति" (तै-सं-३-२) इति श्रुतिः अयथादेवतपदेन देवताबहुत्वम्—तत्त-

द्वैतोचितविभिन्नकर्म च "यो यथादेवतम्" इत्यादिना विधित्मती अभेदप्रतिपत्त्या कृतं कर्म पापहेतुकमिति विदधाति हि। तस्माद्भेदप्रतिपत्तिरेव कर्तव्येति श्रुत्यभिसन्धिरिति चेन्नायं दोषः—तच्छ्रुतेः कर्मकाण्डोदितत्वेन केवलाविद्यामग्नजीवपरत्वात्। तेषामवश्यं विधेया हि कर्मसक्तता चित्तशुद्ध्यर्थम्, यद्विना न हि मोक्षोपलब्धिः। अत एव स्मर्यते—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" (भ-गी-३-२६) इति। अतोऽभेदधियैव जगद्ब्रह्मणोरैक्यं विभावयन् न निन्द्याद्यत्किञ्चिदपीति विदांकुर्वन्तु महान्तः।

अतो न निन्द्याद्यत्किञ्चिदपि नास्त्यात्मनः परम्।
यदि निन्दति तत्सर्वमात्मानमुपपद्यते ॥ ८ ॥ इति।

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराजमानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्षश्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-

**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**

विमर्शामृते निन्दापवादो नाम

अष्टमबिन्दुः

श्रीः

# वैवाहिकांशविमर्शो नाम नवमबिंदुः

तत्र प्रथमं साापिण्ड्यनिरूपणम् —

> एकाङ्कः सप्तभक्तश्चेद्दशाद्याः प्रयुतावधि ।
> चन्द्राब्धिकरनागेषुसप्तांशाः शुक्रमापकाः ॥ १ ॥

एकाङ्कः—एकसङ्ख्यारूपः । स तावत् कूटस्थशुक्रप्रतीकत्वेन पूर्णाङ्कत्वमायाति । सप्तभक्तश्चेत्—सप्तसङ्ख्यया यदि विभक्तः-तदनन्तरागत-दशादिप्रयुतान्तषट्स्थानेषु क्रमेण १-४-२-८-५-७ इतीमे भवेयुरङ्काः । ते यथाक्रमम् पुत्रपौत्रादिषट्पुरुषावस्थितकूटस्य शुक्रं मापयन्ति । यथा-पुत्रे कूटस्थशुक्रमेकदशांशपरिमितमिति—पौत्रे चतुश्शतांशपरिमितमित्यादिना । सत्येवं सप्तमे पुरुषे सप्तप्रयुतांशपरिमितं कूटस्थशुक्रं लक्षयतीयं भागहारक्रिया । तदावशिष्यते तावदेकः प्रयुतांशः । तेन पुनरपि पुरेव भागहारक्रियाचक्रमावर्तते । अत उपरतमेतावता । तस्मादभूत्साापिण्ड्यं साप्तपौरुषम् ।

ननु एकाङ्कस्य को विधिः सप्तैव भाजक इति चेदुच्यते—"सूर्यो-मरीचिमादत्ते । सर्वस्माद्भुवनादधि" इति श्रुत्या निरूपितं जगदुपादानकारणं सूर्यमरीचिरिति । सा सप्तधैव विभक्ता आरोगादिभिः ("आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान् विभासः ।" इति श्रुतिप्रसिद्धैः), ते परिदृश्यन्ते चेन्द्रधनुषि । तेषामृषित्वं च श्रुतिर्विधत्ते "षड्डुद्यमा ऋषयो देवजा" इति । त एव कश्यपाद्याः (कश्यप-अत्रि-भरद्वाज-विश्वामित्र-गौतम-वसिष्ठ-जमदग्नि इति संज्ञकाः) इति स्मर्यन्ते स्मृतिभिः । तेषामन्योन्यानुप्रविष्टत्वात् तज्जनितपुरुषस्यापि सप्तर्षिमयत्वम् । तथापि स्वस्वाधिक्यर्षि-

---

(१) शुक्रमापकाः—अत्र शुक्रपदेन तन्निष्ठशक्तिः (capacity) ग्राह्या न तु भौतिकं द्रव्यम् ।

(२) आरोगः—एते आरोगाद्याः सप्त क्रमेण आङ्ग्लभाषायाम्—violet-indigo-blue-green-yellow-orange-red इति प्रसिद्धाः । तेषां सङ्केतनाम Vibgyor इति ।

नाम्ना तत्तद्गोत्रनिष्पत्तिः । तत्सम्बन्धित्वेन भौतिकपिण्डस्यापि तदवधिकत्वम्[1] । अत एव अग्निचित् सप्त पुरुषानभिकाङ्क्षति । तथा च श्रूयते "कस्मै कमग्निश्चीयत इत्याहुः । सप्तमा पुरुषानुपजीवानिति वा अग्निश्चीयते ।" (तै-सं-५-५-२-१०) इति । अतः पुरुषप्रतीकैकाङ्कस्य विभजनं सप्तसङ्ख्ययैव कर्तव्यमिति राद्धान्तः । इममेवार्थं वक्ष्यति—

> तस्मात् षडेव पुरुषाः सप्त स्युः कूटगेन ते ।
> सापिण्ड्यचक्रमेवं स्यात् शेषादावर्तते पुनः ॥ २ ॥

पुनरावर्तनं तावत् मण्डलस्यैव न समरेखायाः—अत एतस्य (भागहारलब्धस्य) मण्डलसम्बन्धित्वं निरूपयति—

> एतद्द्विशिष्टपूर्णाङ्कत्रयसन्ताडितो[2] यदि ।
> व्यासस्स्यात्परिधिस्तस्मात्सापिण्ड्यं चक्रतोलितम् ॥ ३ ॥

अथ पुत्रपौत्रादिषु षट्पुरुषेषु पूर्वपूर्वं प्रति उत्तरोत्तरस्य दशांशत्वं निरूपयति—

> पितुः पुत्रो दशांशः स्याद्दशास्यामिति[3] मन्त्रतः ।
> तस्मादिदं स्याद्गणितं सापिण्ड्यपरिमापकम् ॥ ४ ॥

अथ व्यासगुणकस्थत्रिपूर्णाङ्कनिष्पत्तये कूटस्थस्य त्रिपूर्णाङ्कत्वं निरूपयति—

> कूटस्थे तु त्रिपूर्णाङ्कभावो वस्वादिसाधितः[4] ।
> एवं परिधिवत्पूर्णं सापिण्ड्यं तु पुरोदितम् ॥ ५ ॥

---

(१) **तदवधिकत्वम्**—तत्सप्तपुरुषावधिकत्वम् । सप्तमपुरुषावधि व्याप्तिमानयं भौतिकपिण्ड इति भावः । तदेव दर्शयति सप्तविभजनक्रिया एकाङ्कस्य ।

(२) **एतद्द्विशिष्ट**—........ $\frac{22}{7}$ ($\pi$)

(३) **दशास्यामिति**—"दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" इति वैवाहिकमन्त्रः ।

(४) **वस्वादिसाधितः**—वसुरुद्रादित्यरूपावस्थितिर्वर्णिता वेदे पुरुषस्य । अतस्तस्य त्रिरूपत्वम् तेन त्रिसङ्ख्याप्रतीकत्वं च । किञ्च "त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः" (तै-सं-५-६-२-३३) इति च श्रुतेरपि ।

अथोक्तार्थोपबृंहणाय बिन्दुविमर्शनं निरूपयति—

मनःषष्ठेन्द्रियोस्रास्तु सषष्टित्रिशतोन्मिताः ।
बिन्दोरंशाश्च तस्मात्तत्तुलितानीन्द्रियाणि हि ॥ ६ ॥

मनःषष्ठेन्द्रियोस्राः-मनःषष्ठं येषां श्रोत्रादिपञ्चेन्द्रियाणां तानि तथोक्तानि । तेषां उस्राः-मयूखाः । सषष्टित्रिशतसंहिताः—३६० सङ्ख्यापरिमिता इति भावः । तथा चोक्तं **सौन्दर्यलहर्याम्** (१४)—

"क्षितौ षट्पञ्चाशत् (५६) द्विसमधिकपञ्चाशदुदके (५२)
हुताशे द्वाषष्टि(६२)श्चतुरधिकपञ्चाशदनिले (५४) ।
दिवि द्विष्षट्त्रिंशत् (७२) मनसि च चतुष्षष्टि(६४)रिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥" इति ।

नन्वत्र मनसश्चन्द्रजन्यत्वात्—चन्द्रस्य षोडशकलामयत्वाच्च जन्यजनकयोरभेदाध्यवसायेन मनसश्च चन्द्रवत्षोडशमयूखा इति वक्तव्ये चतुष्षष्टिरिति यदुक्तं तदसदिति चेन्नायं दोषः—तस्य मनोबुद्ध्यहङ्कारचित्तरूपेण चतुर्धा विभक्तत्वात् उक्तमुपपन्नं भवति । एतेन—

"क्षितिश्चापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥"

इति गीतोक्ताः प्रकृतयः परामृष्टा भवेयुः मनःषष्ठेन्द्रियपदेन । तस्मादिदं सर्वं समवृत्तसाध्यम् जडमेवेति मत्वा दीर्घवृत्तसाध्यां जीवभूतां चित्प्रकृतिं स्मरन्ति पूज्यपादाः 'तेषामप्युपरि तव पादाम्बुजयुगम्' इति । एतत्पादयुगमग्रे परमेश्वर्याः जडचिदात्मकमेव । पश्चाज्जडप्रकृतिवादः पुनरष्टधा भिन्न इति भावः । बिन्दोः—बिन्दुरूपनिष्कलवृत्तस्य—अस्य सृष्टिहेतुभूतत्रिज्यारूपकलाशून्यत्वान्निष्कलत्वम् । तथा विधनिष्कलवृत्तस्य अंशाश्च सषष्टित्रिशत(३६०)सम्मिता इति पूर्वेणान्वयः । तस्मात्—तस्मात्कारणात् । तत्तुलितानि—तद्बिन्दुसमानि इन्द्रियाणीति भावः । इति संमतिः ।

तदर्धजीवासृष्टं तु जगदेतज्जडात्मकम् ।
सममण्डलमेवैतत्सजीवं दीर्घमण्डलम् ॥ ७ ॥

तदर्धजीवासृष्टम्—तत्सममण्डलरूपबिन्दोः स्थाणुरूपस्य निष्कलस्य परमात्मनः—योऽर्धभागः षड्राश्यात्मकः तज्जीवा तन्नारीस्थानीयज्यारूपा व्यासात्मिकेति भावः । तया सृष्टमेतत् जगत् । जडात्मकं तु—जडात्मकमेव । तुरवधारणे । इति प्रथमा सृष्टिः । तदनुप्रविष्टा जीवप्रकृतिः मायाप्रतिबिम्बितचिदाभासरूपा—इयमेव भगवद्गीतोक्तपराप्रकृतिः जीवरूपा । तथा चोक्तम्—

"जीवभूतां महाबाहो प्रकृतिं विद्धि मे पराम् ।"

इति । एतदनुप्रवेशस्तु श्रुत्यैवोपदिष्टः "अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि" (छा-६-३-२) इति । एतद्दीर्घवृत्तीयगणितसाध्यम् । अनेनैव सर्वभूतजातं चेतनवद्भवति । दीर्घवृत्तं नाम त्रिनाभिचक्रम् । तथा च श्रूयते "त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वाभुवनानि तस्थुः" (चित्तिप्रश्नः) इति । एतत्सर्वं मनसि निधायैवोक्तम्—सममण्डलमेवैतत्सजीवं दीर्घमण्डलम्—इति । अत्र अर्धजीवापदेन अर्धनारीश्वरः स्मार्यते । पौराणिकदृशा सोपाधिकः । तदाप्ययमेवार्थः यतः निर्गुणपरब्रह्मरूपाद्बिन्दोरेव सगुणा मायारूपिणी रेखा समुत्पन्ना इत्यनुक्त्वा न पार्यते । [२]बिन्दुनिर्गुणत्वं पाश्चात्यानामपि संमतम् [३]तस्माद्रेखोत्पत्तिश्च । अत्र निर्गुणात्मगुणोत्पत्तिराश्चर्यकारिणी तस्यादृष्टपूर्वत्वात् लोके निरुपमा च । अत इयं मायापदेन व्यवहृता । एतद्वर्णनं मण्डनार्येण **मानसोल्लासे** "नासती विद्यमाना बाध्यमान न वा सती" इत्यादिग्रन्थेन कृतमेव । तथापि सर्वानुभूतेयं मायाऽविद्याऽपरनाम्ना । यथा निर्गुणसुषुप्तेः सगुणजाग्रदवस्थापत्तिः प्राणिनः । उक्तं चैतद्भाष्यकारैः छान्दोग्याष्टमाध्याये

---

(१) **अर्धजीवा**—radius. (२) **बिन्दुर्निर्गुणत्वं**—a point is a position with out magnitude इति बिन्दोर्निराकारता । (३) **तस्माद्रेखोत्पत्तिः**—a line is a train of points इति बिन्दोः रेखोत्पत्तिः

जीवस्य "सुषुप्तेः जाग्रत्स्वप्नावस्थां प्रति गमनम्--अविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशादाहानिमित्तमित्यवोचाम" (छा. भा. ८.६.३) इति। एवं सर्वानुभूतापि न ज्ञायते केनापि। उक्तश्चास्याः महिमा—

"ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति।"

(देवीसप्तशती) इत्यादिना।

एतादृशमायास्थानीयरेखारूपत्रिज्या[1]-बिन्दुपार्श्वद्वयवर्तिनी चेद् षड्ज्या[2] भवति। बिन्दोः प्रावप्रत्ययप्रवृत्तिरूप-श्रीं-ह्रीं-बीजाधिष्ठानभूतवामदक्षपार्श्वद्वय-सद्भावात्। तथा च श्रूयते "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे" इति। तत्पार्श्वद्वयस्यापि सगुणत्वाद्बिन्दूत्पन्नरेखायाः तदुभयपार्श्वव्यापिनीत्वं षडज्यात्वं चोपपन्नम् अतस्तस्याः पौराणिकोक्तार्धनारीत्वं च।

ननु बिन्दोः ब्रह्मप्रतीकत्वात् "अनन्तरमबाह्यम्" इत्यादिश्रुतिभ्यो ब्रह्मणः पार्श्वाभावप्रतीतेश्च कथं बिन्दुपार्श्वसिद्धिरिति चेन्नायं दोषः। "अणोरणीयान्" इति ब्रह्मणोऽणुत्वभावनया तत्सिद्धेः। एवमुक्तषड्ज्यातः जडसृष्टिः। अत—एतत्—दीर्घषड्ज्ययोरन्तरमेव जीवप्रकृतिसूचकम्। इदं पुनः "स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्" इति श्रुतिखण्डेन दर्शितम्। अत्र समदीर्घवृत्तीयगणितयोः फले जडचिदात्मके भवतः। अत्र जडात्मकत्वं नाम सर्वदाऽव्यभिचरितत्वं तद्भिन्नं चिदात्मकत्वम्। अनयोः प्रथमं समवृत्तीयं अपरं दीर्घवृत्तीयमिति विवेकः। एवं षड्ज्या सकार्या निरूपिता।

ससप्तांशत्रिघ्नषड्ज्या स्यादेव सममण्डलम्।
तज्जीवांशो जगन्मातुः द्वितीयं पदपङ्कजम्॥ ८॥

ससप्तांशत्रिघ्नषड्ज्या—सप्तांशविशिष्टत्रिभिः गुणितव्यासः। सममण्डलमेव—समवृत्तमेव। स्यात् इत्यन्वयः। तज्जीवांशः—तत्सममण्डलानुप्रविष्टजीवांशः

---

(१) त्रिज्या-राशित्रयसञ्जनिता ज्या (radius) (२) षड्ज्या—षड्राशि-जनिता ज्या (diameter)

"तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिसिद्धो जीवांशः। दीर्घमण्डलगत-जीवांश इति यावत्। जगन्मातुः—श्रीपरमेश्वर्याः। द्वितीयं पदपङ्कजं भवति। आकृष्याकर्षकधर्माश्रयत्वेन सजीवत्वमुपपद्यते दीर्घवृत्तस्य।

तत्सत्तयैव सर्वाणि चरन्ति भुवनानि च।
साऽणुगर्भेऽपि संदृष्टा परीक्षकपरीक्षणैः॥ ९॥

तत्सत्तयैव—तज्जीवसत्तयैव। सर्वाणि भुवनानि—ब्रह्माण्डानि। चरन्ति—सञ्चरन्ति। सा—जीवसत्ता। अणुगर्भेऽपि। परीक्षकपरीक्षणैः—अद्यतनकालिक-पाश्चात्यविद्वद्भिः कृतपरीक्षणैः। संदृष्टा—[1]आग्नेयजलीयतैजसाण्वोः आकृष्या-कर्षकत्वरूपेण दृष्टेति भावः।

**अथ गोत्रतत्प्रयोजननिरूपणम्—**

बीजस्य वप्ता पुरुषः क्षेत्रं युवतिरीरिता।
[2]तत्तेजोऽसृजतेत्यादिश्रुतिनिर्दिष्टतेजसः॥ १०॥
[3]कणेभ्यो भिन्नसङ्ख्येभ्यः नानाजातिसमुद्भवः।
[4]सूर्यो मरीचिमादत्त इत्यादिश्चारुणी श्रुतिः॥ ११॥
ब्रूतेऽर्थमिममेवैतत्तेजसो मुख्यरश्मयः।
[5]आरोगाद्यास्सप्त तेषामृषित्वं [6]चात्र [7]दर्शितम्॥ १२॥

---

(१) **आग्नेयजलीयतैजसाण्वोः**—पञ्चीकृताग्निमहाभूताण्वोरिति भावः। अनयोः क्रमेण electron, proton इत्याङ्ग्लनामनी भवतः।

(२) **तत्तेजोऽसृजत**—छान्दोग्योपनिषदुक्तमेतत्।

(३) **कणेभ्यः**—अंशेभ्यः। जगदुपादानभूतेभ्य इत्यर्थः। तथा च श्रूयते "सूर्यो मरीचिमादत्ते" इति। एते कणाः chromosomes नाम्ना तर्किता भवेयुः।

(४) **सूर्यो**—"सूर्यो मरीचिमादत्ते—सर्वस्माद्भुवनादधि" इति अरुणम्।

(५) **आरोगाद्याः**—"आरोगो भ्राजः पटरः पतङ्गः। स्वर्णरो ज्योतिषीमान् विभासः" इत्यरुणोक्तसप्तरश्मयः।

(६) **ऋषित्वम्**—"षड्यमा ऋषयो देवजाः" इति अरुणश्रुतौ दर्शितं ऋषित्वम्।

(७) **अत्र**—अरुणश्रुताविसर्थः।

तेषां जगदुपादानकारणत्वान्न नाशनम् ।
आसृष्टेः ; तद्भवत्वेन गोत्रस्याप्यविकारिता ॥ १३ ॥

काश्यपादेस्तदुच्छिष्टं साविण्ड्यक्षयकर्मणि ।
अतो जीवप्रकृतिजं गोत्रं पितुरनश्वरम् ॥ १४ ॥

नश्वरं सप्तमे स्थाने साविण्ड्यं मातृसम्भवम् ।
जडप्रकृतिकल्पेन पिण्डस्य क्षतिसम्भवः ॥ १५ ॥

प्रयुते सप्तमे स्थाने तथा सप्तमजन्मनि ।
अक्षमालान्त्यवर्णत्वं नष्टं साभूदरुन्धती ॥ १६ ॥

तथोपनयनं शूद्रक्षेत्रजस्यापि सप्तमे ।
एवं दोषो विनष्टस्स्याद्गुणो वा सप्तमे पदे ॥ १७ ॥

पिण्डजः ; गोत्रसम्पत्तिस्त्वासृष्टिस्थायिनी ततः ।
असमानार्षजां कन्यामसपिण्डां यवीयसीम् ॥ १८ ॥

---

(१) **उपादानकारणत्वात्**—समवायिकारणत्वात् । "यत्समवेतं सत् कार्यमुत्पद्यते तत्समवायिकारणम्" इति कार्यस्य कारणसमवेतत्वदर्शनादिति भावः ।

(२) **तद्भवत्वेन**—आरोगादितत्कारणजन्यत्वेन । आरोगादीनां क्रमेण कश्यपादिनामभिः (कश्यप-अत्रि-भरद्वाज-विश्वामित्र-गौतम-वसिष्ठ-जमदग्नि इति सप्तनामभिः) प्रसिद्धत्वेन-तज्जन्यप्राणिप्रवरानुशासने "अगस्त्याष्टमानां सप्तर्षीणां प्रवराण्यनु व्याख्यास्यामः" इति समुद्देशवाक्यनिर्दिष्टत्वाच्च गोत्रस्य तद्भवत्वमुपपन्नम् ।

(३) **काश्यपादेः**—काश्यप-भारद्वाज-आत्रेय इत्यादिना प्रसिद्धगोत्रस्येति भावः ।

(४) **तदुच्छिष्टम्**—यदवशिष्यते साविण्ड्यक्षयत्वनिरूपणोपयोगिनि कर्मणि (सप्तसङ्ख्यया एकाङ्कविभजनरूपकर्मणि) प्रयुतस्थाने एकसङ्ख्यारूपं तदित्यर्थः । तदेवोच्छिष्टमनश्वरतया अवशिष्टमित्यर्थः ।

(५) **साविण्ड्यम्**—आङ्ग्लभाषायां genes इति तर्कितोऽयं विषयः ।

(६) **साभूदरुन्धती**—एषा पुराणप्रसिद्धा कथा मनुस्मृतावपि च सूचिता । "(वसिष्ठः) रेमे चण्डालकन्यया" इति ।

(७) **तथोपनयनम्**—एष उपनयनविधिः स्मृत्यन्तरे दर्शितः "जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा । व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥" (याज्ञवल्क्यस्मृतिः-१.९७) इति ।

निवहेदिति घुष्यन्ति स्मृतयस्तस्य कारणम् ।
वक्ष्ये तत्सावधानेन शृणु वत्स विमत्सरम् ॥ १९ ॥
प्रकाशो विद्युतोर्योगाद्भवेदेव धनर्णयोः ।
तथा विभिन्नगोत्रेऽस्थदम्पत्योर्योगतः सुधीः ॥ २० ॥
गोत्रस्य तैजसत्वेन विद्युत्साम्यं निदर्शितम् ।
सापिण्ड्यं यदि दम्पत्योः सन्निकृष्टं सरुक्फलम्[1] ॥ २१ ॥
पौनःपुन्योप्तसस्यस्य फलमेकक्षिताविव ।
तयोस्तु[2] भूतसाम्याद्धि तज्जातफलफल्गुता ॥ २२ ॥
विनिश्चितेयं पाश्चात्यविद्वद्भिश्च परीक्षणैः ।
तत्पुत्रसुखवाञ्छा चेत्सापिण्ड्योपयमं त्यजेत् ॥ २३ ॥
तथा सगोत्रपत्नीं च पुत्रविज्ञानकाङ्क्षया ।
एवं सगोत्रसापिण्ड्यफलं ज्ञात्वा चरेद्बुधः ॥ २४ ॥

**अथासवर्णविवाहफलितविमर्शः—**

'चातुर्वर्ण्यं मया सृष्टम्' इति गीतानुशासनात् ।
सत्त्वादितारतम्येन सन्ति वर्णा वरावराः ॥ २५ ॥
तुल्यवर्णमपत्यं[3] स्याद् दम्पत्योस्तुल्यवर्णयोः ।
पूर्णाङ्कान्योन्यगुणनात् लब्धं तज्जातिजं यथा ॥ २६ ॥

**अथ स्त्रीसत्त्वस्य प्रकाशत्वमात्रं निरूपयति—**

दीपं तु जनयेद्दीपो न तथा ज्योतिरिङ्गणः ।
व्यञ्जयेदाश्रितं किन्तु नारीसत्त्वं च तत्तथा ॥ २७ ॥
वरायामधिकं सत्त्वं तारतम्यक्रमात्स्त्रियि ।
तदल्पं व्यञ्जयेत्स्वस्थं सूक्ष्मदर्शकवन्नृदन ॥ २८ ॥

---

(१) **सरुक्फलम्**— रोगयुक्तफलम् । अत्र दम्पत्योः फलं नाम सन्तान इत्यर्थः ।

(२) **तयोस्तु भूतसाम्यात्**—तयोः सस्यक्षेत्रयोः । भूतसाम्यात् अवस्थित-महाभूतसाम्यात् । एतादृशावस्थितिरेव सापिण्ड्यं तस्मादित्यर्थः ।

(३) **तुल्यवर्णमपत्यम्** —उदाहरणम् 5 × 3 = 15 इत्यादिवत् ।

अतो विलोमापत्यस्य राजसं वाऽथ तामसम् ।
ययातेर्देवयान्यां तु जातापत्येष्विवाधिकम् ॥ २९ ॥

शर्मिष्ठायामपत्यं तु सवर्णायां गुणोत्तरम् ।
अतो विवाहे शुभदं सावर्ण्यमुभयोः सदा ॥ ३० ॥

गणितेनाप्ययं सिद्धो विषयो गाह्यतां सुधीः ।
वर्णेषु सत्त्वसम्पत्तिः धर्मपादव्यवस्थया ॥ ३१ ॥

यथा यथा सत्त्ववृद्धिस्तमसश्च क्षयस्तथा ।
अतो व्युत्क्रमसापिण्ड्यतुल्यो लोको गुणाधिकः ॥ ३२ ॥

आदितः क्रमतः सप्त पञ्चत्र्येकांशसंमितम् ।
सत्त्वं ; तत्पूर्णतां याति द्वयैकिषड्जन्मभिः क्रमात् ॥ ३३ ॥

कृतादिचतुष्टये कालपरिमितिरिव वर्णचतुष्टये सत्त्वगुणपरिमितिः धर्मपाद-व्यवस्थयाऽभवदिति एकत्रिंशश्लोकेन सूचितम् ।

अतो जन्मपतीकैकदशादिस्थानेषु एकं विसृजेत् तस्य सर्वसामान्यात् । अवशिष्टषट्सु द्वाभ्यां द्वाभ्यामेकैकः सत्त्वपादः सम्पाद्यते । तेन द्वितीयादि-वर्णानां स्वस्वावस्थितसत्त्वगुणपूरणाय क्रमेण द्विचतुःषड्जन्मावश्यकता सम्भवतीति तात्पर्यार्थः । यथा—प्रथमस्य पूर्णसत्त्वात् एकस्थानस्थो भवति । द्वितीयस्य पादोनसत्त्वात् स तावद् द्विजन्मभ्यां प्रथमो भवति । तृतीयस्य अर्धोनसत्त्वात् स पुनः चतुर्जन्मभिः प्रथमो भवति । चतुर्थसत्त्वस्य त्रिपादोनत्वात् तत्पूरणाय षडपेक्ष्यन्ते जन्मानि इति भावः ।

---

(१) **सत्त्ववृद्धिः**—वृद्ध्युदाहरणम् :— (1) $\frac{4}{1} \times \frac{4}{16} = \frac{16}{16} = \frac{1}{1}$
(2) $\frac{4}{1} \times \frac{1}{1} = \frac{1}{1}$ (3) $\frac{4}{1} \times \frac{4}{1} = \frac{16}{1}$ एवमुत्तरोत्तरवृद्धिः पूर्णाङ्कयोगतः ।

(२) **क्षयः**—क्षयोदाहरणम् :— (1) $\frac{1}{4} \times \frac{1}{4} = \frac{1}{16}$ उत $\frac{4}{16} \times \frac{4}{16} = \frac{16}{256} = \frac{1}{16}$
(2) $\frac{4}{16} \times \frac{1}{16} = = \frac{4}{256}$ एवमुत्तरोत्तरक्षयः अपूर्णाङ्कयोगतः । मनुस्मृति-रप्येवमाह । एवमेव वरावरवर्णविवाहे फलितं द्रष्टव्यम् ।

(३) **अध्यि—4**

अथ वधूवरसङ्कल्पविमर्शः—

"आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्याः" इति खलु वधूवरसङ्कल्पः। अस्मिन् द्वे कार्ये—कर्मकरणं प्रजोत्पादनमिति। अत्र कर्म नाम धर्म एव न लौकिकम्। "धर्मप्रजासम्पत्त्यर्थं स्त्रियमुद्वहे" इति प्रथमत एव कृतवरसङ्कल्पात। लौकिककर्मणां पुनः निद्राहारविहारादीनां निसर्गसिद्धत्वेन वैदिकेऽत्राप्रसक्तेश्च—विवाहस्य विधिचोदितत्वेन वैदिकत्वमुपलभ्यते हि। यथा—"आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इति, "जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति। "अर्धो ह वा एष आत्मनस्तस्माद्यज्जायां न विन्दते नैतावत्प्रजायते असर्वो हि तावद्भवति। अथ यदैव जायां विन्दते अथ प्रजायते तर्हि सर्वो भवति" (वाजसनेयब्राह्मणम्, भाष्यमुक्ताफले पु. ३३ प.१०) इत्यादिश्रुतिभ्यः—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः॥" (मनुः)

इति, "पत्न्या सह प्राणानायम्य" (गृह्यसूत्रम्) इत्यादिस्मृतिभ्यश्च। एतावतोपपादितं धर्मत्वं मिथुनसङ्कल्पितकर्मणः। अत एतत्कर्मफलोपदेशोऽवश्यंभावी वेद इति। तद्गवेषणायामिमाः श्रूयन्ते श्रुतयः। यथा—"अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतं इह प्रजामिह रयिँ रराणः प्रजायस्व प्रजया पुत्रकाम" इति, "सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये। रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम्" इत्यादयश्च। अत्र प्रथमश्रुतौ "इह प्रजामिह रयिँ रराणः" इति प्रजारयिरूपफलद्वयं दर्शितम्। तत्साधनयोग्यता वरस्यापि दर्शिता "तपसो जातं तपसो विभूतम्" इति। अत्र 'तप आलोचने' इति धातूत्पन्नत्वात्तपश्शब्दस्य आलोचनात्मकविमर्शार्थोऽवगन्तव्यः। द्वितीयश्रुतौ तूक्तफलद्वयरूपप्रक्रियायां "रयिं च पुत्राँश्चादादग्निः" इत्यग्नेः प्राधान्यं दर्शितम्। तत्तावत् पुत्रोत्पादनविषये "द्यु-पर्जन्य-पृथिवी-पुरुष-योषित्सु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छान्दोग्यम्)

इति श्रुत्यन्तरे (पञ्चाग्निविद्यायाम्) योषितोऽग्नित्वप्रतिपादनात्सम्भवति । तथा रय्युत्पादने चावश्यं भवेदेव योषितोऽग्नित्वम्—तस्य योषिदग्नेः "रयिं च पुत्राँश्चादात्" इति पुत्रसाहचर्यात् । एवं द्वयोरपि रयिपुत्रयोर्योषिदुपकृतिः समानापि लोके तावदनुभूयते पुत्रविषयोपकृतिर्योषितः न पुना रय्युपकृतिः विमर्शनाभावात् । अत एव विमर्शनावश्यकता श्रूयते "ये तत्र ब्राह्मणाः संमर्शिनः" इत्यादिना । स्मर्यते च—

"यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥"

(भ-गी-२-४६) इति । अत्र विजानत इति पदमुक्तार्थं स्मारयति ।

किञ्च "मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः" इति श्रुतिस्तूक्तमिथुन-सङ्कल्पान्तर्गतकर्मरूपमेव यज्ञं दर्शयति । अनेन यज्ञकर्मणा रय्युत्पादनादि-सकलफलावाप्तिः स्मर्यते—

"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥"

इति गीतावचनेन (३.१०)। एतावता योषिदग्नौ पुत्र इव रयिश्चोत्पाद्य इति प्रतीयमानेऽर्थे तत्प्रक्रियान्वेषणायाम् "अपामग्नेश्च संयोगाद्धेमरूप्यं च निर्बभौ" (मनुस्मृतिः ५ अध्यायः) "आपो वरुणस्य पत्नय आसन्........ ता अग्निरभ्यध्यायत् । तस्य रेतः परापतत् । तद्धिरण्यमभवत् ।" (तै-सं) "चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मि-नीमीं शरणमहं प्रपद्ये" (श्रीसूक्तम्) इत्याद्या बह्व्यः श्रूयन्ते श्रुतयः स्मृतयश्च । एतदर्थविमर्शनेनोपस्थितपाकप्रक्रियादिषु गर्भस्येवास्यापि योषिदग्नेरवसर इति

(१) पाक—विजातीयतेजस्संयोगः । तेजसां विजातीयत्वं तु भौमदिव्यौदर्या-करजभेदेन चातुर्विध्यम् । तत्पुनः प्रमाणतारतम्यभेदेन बहुविधं च । तद्यथा—ताम्रस्य द्रावणोष्णता तावदेकादशशातभागिकांश(centigrade)परिमिता । अयोलोहस्य तु पञ्चदश-शतशातभागिकांशमिता । एवमेव दिव्यरजत(platinum)प्रभृतीनामस्तिद्रावणतेजः परि-माणभेदः । एतदर्थे विजातीयतेजस्संयोगपदप्रयोगो दरीदृश्यते । तादृशपाकक्रियायामधिकोष्ण-ताकार्यं चाल्पोष्णतायां सम्भवति । एतत्प्रक्रियाया उष्णतापकर्ष (cold-process) इति संज्ञा ।

वेदितव्यम् । अतः सम्यग्विमृश्य गुरुमन्त्ररसायनशास्त्रपूर्वकं सफला भवेयु-रित्याशास्महे । सन्ति रहस्यातिरहस्यानि वेदार्णव इति न विस्मरणीयोऽयं विषयः । आपातश्रुतार्थेन न हि तृप्ता भवेयुर्विमर्शका इति च ।

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु
विमर्शामृते वैवाहिकांशविमर्शो नाम
नवम बिन्दुः



श्रीः

# उपमितिकरणविमर्शो नाम दशमबिन्दुः

भाष्यमुक्ताफले प्रथमभूमिकायां (पु. २ प. २३) "तस्य पूर्णस्य ब्रह्मदृष्टान्तत्वेन गृह्यमाणत्वात् उपमितिकरणत्वं सिद्धम्" इत्यत्र उपमितिकरणं नाम उपमानम्। एतत्केवलज्ञानरूपम्—ज्ञानरूपस्योपमितेः करणत्वाङ्गीकारात् न लौकिकं द्रव्यम्। लोके तावदुपमानत्वं द्रव्यस्यैव न गुणादीनाम् केवलानाम्। द्रव्याश्रितानां पुनरस्तु नाम गुण-धर्म-उपमादिषु साहचर्योपचारतः इत्याक्षेपः।

समाधानम्—नायं दोषः, द्वयोरपि पूर्णब्रह्मणोरलौकिकत्वात्। तद्यथा—"प्राणो ब्रह्म कं ब्रह्म-खं ब्रह्म" (छा-उ-उपकोसलविद्या ४-२०) इत्यनया श्रुत्या ब्रह्म निरूपितम्। अत्र प्राण, क, ख पदार्था ब्रह्मतुल्याः (तत्तुल्यं ब्रह्म च)। तथा सति "एकस्यैव वस्तुनः तुल्यान्यनेकवस्तूनि परस्परं तुल्यानि भवेयुः" इति न्यायेन प्राणादयस्त्रयः परस्परं तुल्या अवश्यं भवेयुर्हि। न तथा दृश्यते—प्राणस्य वायुत्वात्, खस्य आकाशत्वात्, कस्य सुखत्वा-द्गुणत्वाच्च। एवमतुल्यवस्तुभिस्तौल्यप्रतिपादनं तावत् ब्रह्मणोऽनिर्वचनीयत्वं बोधयति। तथाऽन्यत्र ज्ञानमेव ब्रह्मेति निर्दिशति श्रुतिः "सत्यं ज्ञानमनन्तं ब्रह्म" (तै-उ) इति। अपरत्र "नासदासीन्नो सदासीत् तदानीम्" (तै. ब्रा. २) इति विरुद्धधर्मवत्तां बोधयति। एवं बहूनि श्रूयन्ते वाक्यान्य-निर्वचनीयत्वप्रतिपादकानि ब्रह्मणः। अत एवैतदलौकिकम्। पूर्णं चैवमेव—तस्य सत्तामात्रत्वाङ्गीकाराद्गणितशास्त्रे। अतस्तस्यापि ज्ञानमात्रशरीरवत्त्वं ब्रह्मवत्। किन्त्वेतस्य जडत्वात् (वेदान्ते) प्रकृतेरिव कारणत्वानङ्गीकारः।

---

(१) सत्तामात्रत्वाङ्गीकारात्—"सर्वैरपि गणितवेदिभिरस्तित्वलक्षण एव बिन्दुः" (नृ. सां. सू. ४ भा.) इत्युक्तेः सत्तामात्रत्वाङ्गीकारादिति भावः। (A point is a position without magnitude इति आङ्गलगणितनियमाच्च)।

तर्कशास्त्रे च "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्" इति। एतेन पूर्णब्रह्मणोरनिर्वचनीयत्वम्—अलौकिकत्वं, चोपपन्नम् तेन तयोरुपमानोपमेयत्वं च। तत उपमानपदार्थे तूपकरणपदप्रयोगः साधीयानिति विदांकुर्वन्तु सन्त इति निरवद्यम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते उपमितिकरणविमर्शो नाम
दशमबिन्दुः



श्रीः

# गीताभिसन्धिर्नाम एकादशो बिन्दुः

द्विरूपत्वेन तत्त्वस्य सन्दिहानमथार्जुनम् ।
विचिकित्साहरं कृष्णो गीतास्वाहोचितं वचः ॥ १ ॥

साङ्ख्य-कर्मविभेदेन ब्रह्मक्षत्राश्रयं हि तत् ।
विहङ्गमार्गसंस्थानमाद्यं ज्ञानैकसाधनम् ॥ २ ॥

पिपीलिकाख्यमार्गोपहितं क्षत्रोपसेवितम् ।
निरपायं द्वितीयं तत्कर्मयोगाभिधं पुनः ॥ ३ ॥

---

(१) **द्विरूपत्वेन**—तत्त्वस्य ज्ञानरूपभावनायां साङ्ख्ययोगभेदेन मूर्तिभावनायां पुरुषप्रकृतिभेदेन द्विरूपत्वमुपपद्यते हि तेनेत्यर्थः ।

(२) **सन्दिहानम्**—सन्देहं कुर्वन्तमित्यर्थः । यथा—"ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।....... मोहयसीव मे ॥" (भ-गी-३-१) इति सन्दिहानमिति भावः ।

(३) **क्षत्राश्रयम्**—क्षत्रियेष्वेव विद्यमानं योगमिति भावः । "इमं विवस्वते योगं.... विदुः" (भ-गी-४-२) इत्युक्तेः । एतेनोत्तमाधिकारिणां साङ्ख्यमार्गस्तदितरेषां योग इति विभज्योक्तमिति निश्चप्रचमेतदुपपन्नं च साङ्ख्यस्य विहङ्गमार्गायमाणत्वेन प्रमादभूयिष्ठत्वात्सुतीक्ष्णधीभ्य एव भागीकृतोऽन्योऽन्येभ्यः सुकुमारधीभ्य इति ।

(४) **ज्ञानैकसाधनम्**—केवलं मोक्षसाधनवदित्यर्थः । तथा चोक्तम्—"लोकेऽस्मिन् द्विविधा निष्ठा ...योगिनाम्" (भ-गी-३-३) इति । इदं सापायम् । यथा—अस्य ज्ञानमात्रोपकरणवत्त्वात्—अपक्वमनस्कत्वेन कदाचिद्भ्रंशसम्भवः । अत इदं सापायं भवति । तथापीदं ब्राह्मणमात्रोपयोगि स्यात्—तेषां पक्वमनस्कत्वात् ।

(५) **क्षत्रोपसेवितम्**—क्षत्रियादिसर्वजनोपकारकम् । तथा चोक्तम् "इमं राजर्षयो विदुः" (भ-गी-४-२) इति । अतः कर्मठानां (क्षत्रियादीनाम्) सर्वेषामुपकारकम् । अत्रादिशब्दस्तु "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इत्युक्तेर्गृहीतः । अस्य कर्मकरणद्वारा क्रमेण (चित्तशुद्ध्यादिगुणोपलब्धिक्रमेण) ज्ञानप्राप्तेः पिपीलिकावत्पदानुपदक्रमगतिमत्त्वेन निरपायत्वमुपपन्नम् । इममर्थमभिसन्धायोक्तं श्रीकृष्णेन यथा—"पार्थ नैवेह नामुत्र....दुर्गतिं तात गच्छति" (भ-गी-६-४०) इति ।

(६) **निरपायम्**—अपायशून्यम्—अस्य कर्मयोगस्य पिपीलिकामार्गाश्रयत्वेनापायशून्यता ।

इतीवैकफलं मार्गद्वितयं तु निरूप्यते ।
योगिनां प्रक्रियारूपमेवमाहार्जुनं हरिः ॥ ४ ॥

भगवद्वचनस्यास्य भावः किञ्चिदिवोच्यते ।
कर्म तावत्फलं सूते तत्फलं बन्धहेतुकम् ॥ ५ ॥

अतस्तन्नैरपेक्ष्येण कर्मयाचाप्यकर्मनाम् ।
तादृक्कर्मैव कर्मस्यात्कर्तव्यमिति चोदितम् ॥ ६ ॥

तदत्र नैरपेक्ष्यं यत्कौशलं कर्मसूदितम् ।
इममेवार्थमाहायं श्लोकः श्रीकृष्णभाषितः ॥ ७ ॥

अत्रौदासीन्यभावस्तदकर्मेति तु कर्मसु ।
तादृशाकर्मकर्ता भूर्मेति संबोधितोऽर्जुनः ॥ ८ ॥

---

(१) **इतीव**—यथा "साङ्ख्ययोगौ पृथग्बालाः ...उभयोर्विन्दते फलम्", "यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" (भ गी ५-४, ५) इति । अत्रापि-शब्दार्थस्तु साङ्ख्यावरोऽपि योगः फलदाने तत्तुल्य इति ज्ञेयः ।

(२) **एवम्**—वक्ष्यमाणरीत्या । यथा गीतासु "कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः । स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥" (४-१८), "बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते । तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ।" (२-५०) इति । किञ्च योगिलक्षणनिरूपणद्वारा योगं विशिनष्टि "यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥, त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥" (४-१९, २०) इति ।

(३) **अस्य**—"कर्मण्यकर्म यः" इत्यादिश्लोकस्य ।

(४) **बन्धहेतुकम्**—बन्धकारणं भवति । अत एव उक्तं भगवता "मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि" (भ-गी-२-४७) इति । "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इति हेतुं दर्शयति पूर्वार्धेन ।

(५) **अयं श्लोकः**—"योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय । सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते" (भ-गी-२-४८) ।

यतस्सर्वमिदं सत्यं व्यवहारदृशा पुनः ।
दृष्टान्तो मृदि दत्तोऽत्र घटस्सन्निति लौकिकः ॥ ९ ॥

श्रुतौ भाष्ये च गुरुभिः पूज्यपादैः प्रदर्शितः ।
अर्थान्योऽपि च दृष्टान्तः साङ्ख्यार्थे दर्शितः पुनः ॥ १० ॥

रज्जुज्ञाने निवर्तेते सर्पशब्दधियाविति ।
मायावीवेत्यादिनोक्तं जगत्सृष्टिलयावपि ॥ ११ ॥

एतत्साङ्ख्यदिशा तावदुक्तमित्यवगम्यताम् ।
पूर्णेन गुणितं पूर्णमिति सूत्रदिशैव हि ॥ १२ ॥

एतच्छुद्धाख्यगणितप्रक्रियोपहितं भवेत् ।
मिश्राख्यगणितज्ञानं पुनर्द्रव्याश्रयत्वतः ॥ १३ ॥

लोकसत्यवदेवैतद्योगदृष्टान्ततामियात् ।
एतयोर्हि क्रमादुक्तौ दृष्टान्तौ गुरुणा त्विह ॥ १४ ॥

---

(१) **व्यवहारदृशा**—लौकिकदृशा । सर्वमिदं सत्यमिति भावः । तथा चोक्तम्-
"देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥"
(ब्र. सू. भा. १-१-४) इति ।

(२) **श्रुतौ**—वेदे । यथा "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"
(छा. ६-१-४) इति ।

(३) **भाष्ये**—शङ्करभाष्ये । यथा—"मृद्विवेकदर्शिनां घटशब्दबुद्धी" (निवर्तेते
इति पूर्वेणान्वयः) ।

(४) **अन्योऽपि**—अपरोऽपि । यथा—"रज्जुविवेकदर्शिनां सर्पाभिधान-
बुद्धी निवर्तेते" (छा. भाष्यम्) इति ।

(५) **मायावीव**—गारुडकर्मकर इवेत्यर्थः । तथा चोक्तम्—"मायावीव विजृ-
म्भयत्यपि महायोगीव" (दक्षिणामूर्त्यष्टकम्) इति ।

(६) **पूर्णेन गुणितं पूर्णम्**—एतन्नृसिंहसाङ्ख्यदर्शनसूत्रम् ।

(७) **शुद्धाख्यगणितप्रक्रिया**–the process of the Pure Mathematics.

(८) **मिश्राख्यगणित**—Applied Mathematics.

(९) **एतयोः**—साङ्ख्ययोगयोः ।

रज्जुसर्पभ्रमस्तद्वद्विवर्तो मृद्घटाश्रयः ।
इत्येतयोः फलं तुल्यमिति कृष्णेन भाषितम् ॥ १५ ॥

तथाप्याद्यादुत्तरस्मिन् योगे काणादधर्मवत् ।
मोक्षः सव्यवहारोऽतो जीवस्य निरपायता ॥ १६ ॥

छायावर्जितवृक्षस्तु निरुत्तश्चातपे यथा ।
हानिं कदाचिल्लभते तद्वद्योगोचितो जनः ॥ १७ ॥
(साङ्ख्ये नियोजित इति शेषः)

अतः पिपीलिकामार्गतुल्योऽसौ योग एव हि ।
साङ्ख्ये विहङ्गमार्गो हि दृष्टान्तत्वेन कल्पितः ॥ १८ ॥

तस्मादस्त्यवकाशोऽत्र प्रमादस्येति हेतुना ।
लोकसङ्ग्रहवाक्येन दर्शिता योगयोग्यता ॥ १९ ॥

अतो मृद्घटदृष्टान्तयोर्ज्यो योगो विशिष्यते ।
मृद्यत्र घटकार्यस्य व्यावहारिकसत्यता ॥ २० ॥

तद्वज्जगदिति ज्ञानाच्छ्रद्धा कर्मसु जायते ।
फलानपेक्षया तत्र मोक्षसाधनतापि च ॥ २१ ॥

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।"
इति दृष्टान्तपूर्वं तद्योगवैशिष्ट्यमीरितम् ॥ २२ ॥

निर्मत्सरं विविच्यातो यस्य यत्राधिकारिता ।
तदुपास्यतया वेत्ति सोऽमृतत्वाय कल्पते ॥ २३ ॥

---

(१) **कृष्णेन (श्रीकृष्णेन) भाषितम्**—"यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति ।

(२) **काणादधर्मवत्**—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति काणादसूत्रोक्तधर्मो अभ्युदयसहितमोक्षप्रतिपादकः तद्वदित्यर्थः ।

(३) **लोकसंग्रहवाक्येन**—"लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" (भ-गी-३-२०) इति वाक्येन ।

(४) **योगयोग्यता**—कर्मकौशलरूपयोगप्राधान्यता इति भावः ।

यत्र यत्र जगति भ्रमोदय-
स्तत्र कृष्णमतसांख्यकारणम् ।
रज्जुसर्पकथनं निदर्शने
विप्रयोग्यमिदमेव वर्त्म तत् ॥ २४ ॥

यत्र यत्र जगतस्तु सत्यता
लोकदृष्टिवशतो विवर्ततः ।
तत्र कृष्णमतयोगकारणं
मृद्घटोऽत्र कथितो निदर्शनम् ॥ २५ ॥

कृष्णसंमतमिदं तयोरभू-
द्योगवर्त्मनिरपायदर्शनात्[1] ।
[2]जीवरक्षणकृते कृतोदय-
स्तज्जगाद मुहुरर्जुनाय सः ॥ २६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते गीताभिसन्धिर्नाम
एकादशबिन्दुः

---

(१) **निरपायदर्शनात्**—अपायाभावात् । तथा चोक्तम् :—"नेहाभिक्रम-नाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥" (भ-गी-२-४०), "न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ।" (भ.गी-६-४०) इति ।

(२) **जीवरक्षणकृते**—जीवरक्षणार्थम् । तथा चोक्तम् —"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः", "उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।" (भ-गी-३-२२, २३, २४) इति ।

श्रीः

# षोडशादिदक्षिणोपपत्तिर्नाम द्वादशो बिन्दुः

जन्माद्यस्य[1] यतस्तद्वत्सूत्रादात्मकृतेरिति[2] ।
यतो वेति[3] तदात्मानमिति[4] च श्रुतितो जगत् ॥ १ ॥
विवर्तमात्मनोऽपत्यं दशास्यामिति[5] च श्रुतेः ।
दशांशत्वविशिष्टं तद्दशैकीकरणात्स्वकम्[6] ॥ २ ॥
अतो जगत्प्रतीकास्तु षोडशाद्या[7] दशाहृताः[8] ।
रुद्रविष्णवजसाराः[9] स्युः पूर्णभागहृताविव[10] ॥ ३ ॥

---

(१) **जन्माद्यस्य यतः**—(ब्र. सू. १-१-२)

(२) **आत्मकृतेः**—"आत्मकृतेः परिणामात्" (ब्र. सू. १-४-२६)

(३) **यतो वा**—"यतो वा इमानि भूतानि जायन्ते........तद्विजिज्ञासस्व तद्ब्रह्म" (तै. उ. भृ)

(४) **तदात्मानम्**—"तदात्मानँ स्वयमकुरुत" (तै. उ. आ)

(५) **दशास्याम्**—"दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ।" (मन्त्र-प्रश्नम्)

(६) **स्वकम्**—स्वकीयरूपमित्यर्थः । दशांशानां दशकं एकीकरणात् पूर्णाङ्कता-मियादिति भावः । (.१×१०=१) अत्र दशरूपमूर्तिस्थितपूर्णस्य एकाङ्क एवान्त-र्भावः । अत एवात्र एकाङ्कस्य पूर्णाङ्कत्वम् ।

(७) **षोडशाद्या**—१६, ११६, १११६ इत्येताः सङ्ख्याः प्रत्येकं त्रिगुण-जगत्प्रतीकभूता इति भावः । षोडशसङ्ख्या तावत् सात्त्विकस्य जगतः—षोडशोत्तरशतं पुनः राजसस्य—अवशिष्टं तामसस्य प्रतीकमिति तात्पर्यार्थः । एते क्रमात् पूर्णभागहारस्य-भाज्यभाजकशेषरूपपूर्णधर्मतुल्यधर्मा भवेयुः ।

(८) **दशाहृताः**—दशधा दशधा आहृताः ।

(९) **रुद्रविष्णवजसाराः**—०—∞—१ इत्येतद्रूपसारवत्यः—फलवत्य इति यावत् ।

(१०) **पूर्णभागहृताविव**—'पूर्णमदः पूर्णमिदम्' इत्यादिमन्त्रोक्तपूर्णभागहार इव । यथा—०, ∞, १, २ इत्याद्येवं रूपं फलं भवति तद्वदिति भावः । किन्तु पूर्ण-भागहारे पूर्णस्य निर्गुणत्वादाद्ययोः रुद्रविष्ण्वोः ०, ∞ -एवंरूप-निर्गुणत्व-अनन्तत्व-द्योतकफलनिष्पत्तिः । दशांशाङ्काहृतौ पुनः तेषां सगुणत्वात् (१, .५, .१) एवं सगुणाङ्क-रूपफलनिष्पत्तिः । इयानेव तयोर्भेदः । तयोराकृती यथा—

(१) ०) ० (०,∞,१,२ इत्यादि
०
०

(२) शिवः (अस्य पूर्णत्वेन दश दशांशरूपत्वम् ) :— .१×१०) .१×१६ (१ = .१×१०
१०

विष्णुः (अस्य हरार्धत्वेन अर्धनारीत्वं ततः पञ्च दशांशरूपत्वम् ) :— .५) ६.६ (१ = .५
०.५

पितामहः (अस्य शिवपुत्रत्वेन दशांश- मात्ररूपत्वम् पितुरपेक्षया पुत्रस्य दशांशत्वात् ) .१) ०.१ (१ = .१
०.१
०

सर्वलब्धानि मिलितानि षोडश दशांशाः (.१×१६) भवन्ति।

उक्तार्थं सूत्रयति—भागहारक्रिया तावत्समस्तव्यस्तवाञ्छया। लब्धं त्वेकाकृतावेकं सूतेऽर्धं पुनरैच्छिकम् ॥ अत्रोदाहरणम्—शतांशान् शतधा दातुमेकीकर्तुं शतेन हि। विभजेल्लब्धमप्येकं तदर्धं तु द्विधेच्छया ॥ शतरूप्यांशान् शतेभ्यो दातुं वा रूप्यकरणाय वा शतेनैव भक्तव्यास्ते- तल्लब्धं चैकमेव किन्तु दानार्थे लघीयः रूप्यार्थे गरीयश्च भवति।

१००) १०० (१ रूप्यशतांशभूतपैसाख्याः शतं रूप्यांशाः इति लब्धम्
१०० [एतच्छतेभ्यो दानार्थश्चेल्लघीयः, रूप्यकरणार्थश्चेद्गरीयश्च
० भवतीति वेदितव्यम् ]

एतद्वैचित्र्यं जीवकर्मणोऽपि दर्शयति–'फलापेक्षानपेक्षाभ्यां जैवं कर्मैवमेव च। सूते सिद्धी योगसंज्ञा द्वितीया जीवतारिका ॥' (जैवम्-जीवकर्तृकम् "सङ्ख्याकर्मवदनादि सान्तं च कर्म" [नृ-सा-सू-२४] इति सूत्रेण सङ्ख्याजीवकर्मणोस्तौल्यनिरूपणात्तथोक्तमिति भावः। योगसंज्ञा-योगनामिका "सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते" (भ-गी-२-४८) इति भगवदुक्तलक्षणलक्षितेति भावः)।

अत्र दशांशाङ्कानां दशभक्तत्वे प्रथमं पूर्णाङ्कफलमाविर्भवति। पूर्णाङ्कफलं नाम— पूर्णभागहारलब्धाविर्भूतरुद्रविष्ण्वजात्मकफलत्रये रुद्रात्मकं यत्प्रथमं फलं तस्य पूर्णत्वात् तत्साधनजाताङ्काः पूर्णफलसंज्ञिता भवेयुः-तदेतत्पूर्णाङ्कफलम्। द्वितीयं यद्विष्णुस्थानं तत्पूर्णभागहारे (∞) एवमनन्तनिरूपकं भवति। दशांशाङ्कभागहारे तु दशभक्ता- वशिष्टात् 'पञ्चाक्षरा पङ्क्तिः' इति श्रुत्युक्तपाङ्क्तत्वविशिष्टदशांशाङ्कपञ्चकं जगद्रूपविष्णुप्रतीकत्वेन पृथग्भवति। एतद्भागहारस्य सगुणत्वप्रसङ्गात्। अत्र पञ्च सङ्ख्याशा

षोडशेति शतं तद्वत्सहस्रमिति च त्रिधा ।
मुक्तानुबन्धयुक्तानि दशभक्तानि चेत्क्रमात् ॥ ४ ॥
रुद्रेत्वेकद्वित्रिपूर्णैकाङ्काः स्युस्त्रिपदोन्मिताः ।
एतत्त्रयं पूर्णभागहृतौ त्रिपदसूत्रकम् ॥ ५ ॥

---

विष्णुप्रतीकत्वं तावत् "पाङ्क्तं वा इदँ सर्वम्" इति श्रुत्या, "सर्वं विष्णुमयं जगत्" इति स्मृतेश्च संभवति । अत एवैतज्जगतः प्रपञ्चसंज्ञा च ।

यद्वा दशदशांशाङ्कानां परिणामभूतपूर्णैकाङ्कस्य, रुद्रप्रतीकत्वेनेश्वरत्वसिद्धिः । (अयमीश्वरः सात्त्विकः) तदर्धभूतपञ्चदशांशाङ्कानां प्रकृतित्वेन तमःप्रधानकार्यत्वप्रसिद्धया तयोर्मेलनरूपम् (१+.५) इदमर्धनारीश्वरप्रतीकं भवति । "भोगे भवानीरूपा सा (मूल प्रकृतिः) दुर्गारूपा च सङ्गरे । कोपे च कालिकावेषा पुंरूपे च मदात्मिका ॥" इति दक्षाध्वरध्वंसे वीरभद्रं प्रति विष्णूक्तिः । एनेन प्रकृतेः विष्णुरूपत्वात् तत्स्थानीयदशांशपञ्चकं विष्णुप्रतीकमित्यत्र कः सन्देहः ? एवमेतयोः पार्वतीपरमेश्वरयोर्योगे तदपत्यभूतब्रह्मणः प्रतीकः एकदशांशाङ्क इत्येतदुपपन्नम्—अपत्यस्य दशांशत्वात् । एताद्दशैकाङ्करूपब्रह्मणः नवस्वप्यङ्केषु व्याप्तिसद्भावान्नवत्वं चोपपन्नम्—'नव ब्रह्माणः' इति प्रसिद्धेश्च । एतद्योगेनार्धनारीश्वरष्षोडशोन्मितो भवति (१+.५+.१) एवंरूपः ।

(१) **मुक्तानुबन्धयुक्तानि**—षोडश-शत-सहस्रपदानि मुक्तानुबन्धयुक्तानि चेत्, षोडश-षोडशोत्तरशतं-सषोडशशतोत्तरसहस्रमिति त्रिधा भवन्तीति भावः ।

(२) **दशभक्तानि**—उक्तषोडशादिसङ्ख्यानां जगदन्तःपातित्वात् जगतः मद्ब्रह्मकार्यत्वेनापत्यत्वप्रतीतेः—ताद्दशानां दशवस्तूनामुक्तदिशा पूर्णाङ्कत्वप्रसिद्धया चात्रोक्तषोडशादीनि (१६, ११६, १११६) इत्येतानि वस्तूनि दशसङ्ख्यया भक्तानि-भाजितानि कुर्यादिति शेषः ।

(३) **चेत्**—तथा कृतानि चेत् ।

(४) **रुद्रे**—तृतीयश्लोकोक्तरुद्रविष्णुजसंज्ञकपदत्रयान्तर्गतरुद्रसंज्ञकपद इत्यर्थः ।

(५) **त्रिपदोन्मिताः**—पूर्णभागहारे तावत् भाज्यभाजकशेषसंज्ञकपदैस्त्रिभिः मुक्तानुबन्धरीत्यैव उन्मिता मापिता इत्यर्थः । द्वितीयश्लोकस्थस्वाङ्कपदटिप्पणोक्तदिशा अन्तर्भूतपूर्णाङ्काः सन्तः १, ११, १११ एवंरूपा भवन्तीति भावः । अत्र त्रिपदपदं-एक-दश-शतस्थानत्रयमपि परामृशति । अतस्तद्भिद्दशगुणोत्तरधर्मेण उन्मिताः मापिताः इत्यर्थश्च ग्राह्यः ।

अथ पूर्वश्लोकोक्तत्रिपदस्य रूपप्रयोजने विशिनष्टि—

भाज्यभाजकशेषाणां रूपतौल्येऽपि[1] कर्मतः[2] ।
[3]भेदोऽस्त्यस्तित्वहरणापरिहार्यत्वधर्मतः ॥ ६ ॥

[4]तस्य [5]वाचारम्भणत्वात्तन्मिथ्या-घटवन्मृदि ।
ब्रह्मणीति [6]धियं सूते षोडशादित्रिदक्षिणा ॥ ७ ॥

[7]एतत्त्रितयदानेन तनुरिक्थमनांस्यपि ।

---

(१) **रूपतौल्येऽपि**—स्वरूपतः पूर्णत्वेन तुल्यभावसद्भावेऽपीत्यर्थः। भाज्यादित्रयस्यापि पूर्णत्वात् तथोक्तम् ।

(२) **कर्मतः**—भागहरणरूपकर्मतः ।

(३) **भेदः**—धर्मभेदः । अस्तीत्यन्वयः । यथा—भाज्ये पूर्णे अस्तित्वमात्रधर्मः—तदभावे भागहरणक्रियानुत्पत्तेः तस्य सद्ब्रह्मस्थानीयत्वाच्च । तदेतत्सात्त्विकं भवति । द्वितीये भाजके तु हरणधर्मः—एतस्य (पूर्णस्य) लब्धरूपापत्यजनकत्वेन—अपत्यस्य दशांशत्वप्रसिद्ध्या दशस्थानार्हत्वम्—रजोलेशमन्तरा सृष्ट्यभावात् राजसत्वं चोपपन्नम् । तृतीये शेषपूर्णे तावदपरिहार्यत्वधर्मः अस्तीति सर्वत्रान्वयः—तस्य पूर्णत्वादपरिहार्यत्वमुचितमेव । एतद्धर्मस्य अनन्तसङ्ख्याप्रपञ्चसृष्टिसिद्धत्वात्—प्रपञ्चसृष्टेः अविद्यामूलकत्वात् अस्य (तृतीयस्य शेषपूर्णस्य) तामसत्वमुपपन्नम् भवति । एवं भाज्यभाजकशेषपूर्णानां भेदसद्भावो वर्णित इति तात्पर्यार्थः । एतादृशैतद्भाज्यादित्रयसूचकं पूर्वश्लोकोक्तत्रिपदोन्मित-एक-द्वि-त्रि-पूर्णाङ्काः । एतत्फलमुत्तरश्लोके दर्शयति ।

(४) **तस्य**—पूर्णभागहारस्थितभाज्यादित्रयस्य ।

(५) **वाचारम्भणत्वात्**—"वाचारम्भणं विकारो नामधेयम्" इति श्रुत्युक्तरीत्या वाङ्मात्रत्वेनेति भावः ।

(६) **इति धियं सूते**—मृदि घटवत् ब्रह्मणि प्रपञ्चः मिथ्येति बुद्धिं जनयति । अत एतत् षोडशादित्रिदक्षिणादानेन उक्तविधिना ब्रह्मज्ञानवान् भवेदिति भावः ।

(७) **एतत्त्रितयदानेन**—उक्तषोडशादित्रितयस्य दानेन । षोडशादित्रितयं यथा—१६ दशांशाः = १+·५+·१, ११६ दशांशाः = ११+·५+·१, ११६दशांशाः = १११+·५+·१ इत्येतद्रूपेणावस्थितम् । अत्र षोडशादीनां दशांशत्वं पुनः तेषां जगदन्तःपातित्वेन अपत्यत्वसिद्धावुपलब्धमित्येतन्न विस्मर्तव्यम् ।

दत्तवान् स्यादतो मुक्तस्तद्ज्ञानादपि च ध्रुवम् ॥ ८ ॥
तत्सङ्ख्याकद्रव्यदानाज्जगद्दानफलं लभेत् ।
जगत्प्रतीकपिण्डाण्डदानेनापि च तत्फलम् ॥ ९ ॥
सवनत्रयरूपत्वात्तस्य (पिण्डाण्डस्य) तच्छान्दसाः पुनः ।
वर्णाः सषोडशशतं तत्फलं चापि पूर्ववत् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराजमानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्षश्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्तभारतीमहायतिकृतिषु**
विमर्शामृते षोडशादिदक्षिणोपपत्तिर्नाम
द्वादशबिन्दुः

---

(१) **तद्ज्ञानात्**—तनुधनमनांसि मया दत्तानीति ज्ञानात्। मुक्तो भवेदित्यन्वयः। यथा—तन्वादिषु तनोरात्मत्वप्रतीतेः पूर्णभागहारस्थभाज्यपूर्णसादृश्यं रिक्थस्य (धनस्य) आत्मानमाशापाशबद्धं कृत्वा तद्ध्रासभाव(लघीयस्त्व)जनकत्वेन भाजकपूर्णतौल्यम्—मनसस्तु अनन्तसङ्कल्परूपविशिष्टत्वादनन्तत्वसिद्ध्या शेषपूर्णसादृश्यमुपपन्नम्। अत एतत्त्रितयदानेन एतत्त्रितयं नष्टमिति ज्ञानं भवेदेव, तादृशज्ञानादित्यर्थः। अत्रायं भावः—एतत्त्रितयस्य दानक्रियया अन्तर्धाने सिद्धे अवशिष्टमद्ब्रह्मावगमोऽवश्यंभावीति भावः। अत्र जनकाष्टावक्रचरितं स्मरणीयम्। एतादृशज्ञानविशिष्टदानं श्रुतिरपि प्रशंसति—"तस्माद्दानं परमं वदन्ति" (तै-उ, ना-उ) इति।

(२) **सवनत्रयरूपत्वात्**—"वस्वादिरूपा मे प्राणाः। इदं सवनत्रयम्। यावदायुरनुसन्तनुते" "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनम्" "अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्" "अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्" (छान्दोग्यम्-३-१६, १, ३५) इत्येतत्सवनत्रयरूपत्वादित्यर्थः।

श्रीः

# वेदगुप्तार्थदीपिका नाम त्रयोदशो बिन्दुः

अथ प्रतिज्ञा—

बालानां लघुबुद्धीनां महत्त्वाकाङ्क्षिणां तथा ।
बहूत्साहवतां तावद्धितायायं परिश्रमः ॥ १ ॥

"अज्ञप्रबोधान्नैवान्यत्कार्यमस्त्यत्र तद्विदः ।"[1]
इत्युक्तेर्नेतरत्कार्यं जीवोद्धरणकर्मतः ॥ २ ॥

अथ कस्यचित्साहसिकवृत्तिमेतद्ग्रन्थरचनाबीजत्वेनोपदिशति—

जिगीषा जीविनां साम्येष्वलङ्काराय कल्पते ।
ज्योगियं यदि सन्मार्गगोचरा साधुसंमता ॥ ३ ॥
कुरुते ते मनीषैषा त्वतिसाहसिकी मुदम् ।
लोकोत्तरगुणः कस्य न प्रीतिं तनुते वद ॥ ४ ॥

अथ दृग्द्वैविध्यं निरूप्य तत्साङ्कर्यं न कुर्यादित्युपदिशति—

दृग् द्विधा वेदवेदान्तभेदात्तल्लिङ्गसङ्करम् ।
न कुर्याद्बुद्धिमानाद्ये सगुणा कर्मचोदना ॥ ५ ॥
द्वितीये निर्गुणब्रह्मविस्तरोऽतोऽनयोर्महान् ।
भेदोऽस्ति व्यवहारेऽस्मान्न क्रियात्तद्द्वयोर्युतिम् ॥ ६ ॥
यथा स्वप्नपदत्ताय कलहो जाग्रदाश्रयः ।
यथा वाऽनिद्रिते निद्राप्रसक्तस्याभिभाषणम् ॥ ७ ॥

"शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।"
इत्याद्यद्वैतिनां वाचो न प्रयोज्या हि लौकिके ॥ ८ ॥

---

(१) वेदान्तपञ्चदशी—७-२९०.

(२) साम्येषु—स्वसमानेषु । "समानानामुत्तमश्लोकोऽस्तु" इति श्रुत्युक्तसमानेष्वित्यर्थः ।

**अथ** लौकिकं सर्वथा भेदवदिति निर्दिशति—

लौकिकं द्वैतमेव स्यादद्वैतं परमार्थतः ।
अतस्तयोर्विरोधस्तत्साङ्कर्यं न हि कुत्रचित ॥ ९ ॥
यत्र द्वैतं तत्र भेदोऽवश्यंभावी गुणाश्रयः ।
उच्चावचफलादानहेतुर्दुर्निरसस्ततः ॥ १० ॥
एकजातीययोरण्वोरपि भेदो दिगाश्रयः ।
मानुषस्य यथा वामदक्षभेदस्तु हस्तयोः ॥ ११ ॥
अङ्गाराख्याणवो यद्वत्सन्निवेशवशात्पुनः ।
वज्राङ्गारादिकार्याणि भिन्नानि जनयन्ति हि ॥ १२ ॥
अतो न लभ्यते क्वापि भेदशून्यं चराचरम् ।
भेदमूलस्समस्तोऽपि व्यवहारः फलाश्रयः ॥ १३ ॥

**अथ** तद्भेदसङ्ख्यां निरूप्य वेदस्य तद्बोधकत्वं निरूपयति—

तादृग्भेदविभेदैस्तु श्रीचक्रे जातयोऽभवन् ।
सागराष्टमितैर्लक्षैः प्रस्तारोत्थैर्विलक्षणैः ॥ १४ ॥
विना सर्वेश्वरं कश्चित्तत्सर्वं ज्ञातुमक्षमः ।
तथाविधरहस्यातिरहस्यं वक्ति वेदवाक् ॥ १५ ॥

**अथ** वेदार्थवक्तुः साहसिकता सुधीतोषकरीति वक्ति—

क्व वा वेदः क्व वा धीस्ते गाहितुं सहमेह ते ।
तत्सुधीतोषणायालं साहसं शुकवागिव ॥ १६ ॥
"न तु स्तनन्धयी बुद्धिर्गम्भीरं गाहते वचः ।
तलं तोयनिधेर्द्रष्टुं यष्टिरस्ति न वैणवी" ॥ १७ ॥ (काव्यादर्शः)
इत्यादिसूक्तिमुक्तानां शुक्तिभूता हि ते मतिः ।
अतोऽस्मद्विवृतिं सम्यग्विमृश्यादातुमर्हसि ॥ १८ ॥

---

(१) **अङ्गार**—carbon.

(२) **प्रस्तारोत्थैः**—एतत्प्रस्तारविधिरस्मदीयश्रीचक्रप्रासादे द्रष्टव्यः ।

अथ यज्ञभेदस्वरूपादि विविनक्ति—

"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" ॥ १९ ॥
इति गीतावचो विद्वन् तव विज्ञातमेव हि ।
तत्र द्रव्यादिभेदेन यज्ञभेदा अपि स्मृताः ॥ २० ॥

अथ वेदार्थगोपने श्रुतिसंमतिमाह—

वेदवीर्यं रहस्यं तद्रक्षितं श्रूयते तथा ।
अतोऽत्र द्रव्यविज्ञानं प्रथमं यत्नसाधितम् ॥ २१ ॥

अथ द्रव्यविज्ञानयत्नविधिं दर्शयति—

अश्वमेधेऽश्वशब्दस्य स्वरूपं ब्राह्मणान्तरात् ।
ज्ञेयं हि ; तदिदं वत्स ! वर्ण्यते शृणु सादरम् ॥ २२ ॥
पृच्छामीत्यन्नसूक्तोक्तमर्थजातं विभाव्य च ।
रसशास्त्रोक्तवीर्याणि शिवशक्त्यग्निजानि च ॥ २३ ॥
पश्चाद्यथोचितं कर्म कर्तव्यं धीमता बुध ।
तथा चेत्तत्फलं साक्षादग्नेर्द्रुपदजेव वा ॥ २४ ॥
घुटिकादिस्वरूपं वा चरुरूपमनन्तरम् ।
कृत्यभेदाद्विभिन्नं स्यात्तात्राश्चर्यं विचिन्त्यताम् ॥ २५ ॥

अथ शुश्रूषुपरिभाषानुरुद्धं वक्तृवच इत्याह —

वक्तृवाग्वैभवं भूयाच्छुश्रूषुपरिभाषया । यथा—

---

(१) **द्रव्यादिभेदेन**—"द्रव्ययज्ञास्तपोयज्ञाः योगयज्ञास्तथापरे" (भ. गी. ४-२८) इत्यादिभेदेनेति भावः ।

(२) **श्रूयते**—"वीर्यमादाय तद्वः प्रदास्यामीति । छन्दसां वीर्यमादाय तदेभ्यः प्रायच्छत्" (तै. सं. का ३ प्र ३) इति ।

(३) **शिवशक्त्यग्निजानि**—"अभ्रकं पार्वतीवीर्यं शिववीर्यं तु पारदः" "हिरण्यरेता हुतभुक्" इत्यादीनि रसतन्त्रवचनानि ज्ञेयानीति भावः ।

स्वरूपयोग्यसुरतप्रसङ्गाद्गजाजनि ॥ २६ ॥
इत्यादिवन्नागयोस्तु सुरतं मानुषं भवेत् ।
एवमेवोदितं शास्त्रे रहस्यं गुप्तरूपतः ॥ २७ ॥

अथ प्रकटार्थजुगुप्सितत्वोपपत्तिमाह—

किन्त्वनौचित्यमुक्तं यत्प्रकटार्थो विगर्हितः ।
दुर्धियां वञ्चनायैव रहस्यपरिरक्षणे ॥ २८ ॥

यथा पाण्डवशस्त्राणामाकृतिश्शवसन्निभा ।
न कस्यचित्प्रवृत्तिस्स्याद्गर्हिते लोकविश्रुते ॥ २९ ॥

अथ शास्त्रे रहस्यानि सन्तीति तान्युदाहरति—

आपोमन्त्रार्थमेवं स मनुस्सस्मार तत्स्मृतौ ।
"अपामग्नेश्च संयोगाद्धेमरूप्यं च निर्बभौ" ॥ ३० ॥

इत्येतदर्थं विज्ञाय कृत्वा कर्म यथाश्रुतम् ।
सुवर्णं जनयेद्योऽसावश्वमेधश्रुतेरपि ॥ ३१ ॥

यद्येवं सर्वथान्वीयुः श्रुतयो रसकर्मणि ।
नश्वरोक्त्या कुतस्तासां गुरुतेत्यत्र कथ्यते ॥ ३२ ॥

---

(१) **स्वरूपयोग्य**—"कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे" **(कुमारसम्भवम् १-१९)**

(२) **आपोमन्त्रार्थम्**—"आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत्। तस्य रेतः परापतत्। तद्धिरण्यमभवत्।" (तै-ब्रा-१-२) **इत्यादिमन्त्रार्थमिति** भावः।

(३) **अश्वमेधश्रुतेरपि**—"अश्वस्य वाऽऽलब्धस्य रेत उदक्रामत्। **तत्सुवर्णं हिरण्यमभवत्**" (तै-ब्रा-अ-३ प्र-८ अनु-२)

(४) **रसकर्मणि**—पारदकर्मणि **अष्टादशसंस्कारसंस्कृतपारदकृतहेमकरणादिरसायनप्रक्रियाकर्मणीति भावत्।**

आत्मावबुद्धयेऽभ्यासः तदर्थं स्थिरता तनोः ।
तदर्थं रसबन्धं तद्वेधस्तच्छक्तिमापकः ॥ ३३ ॥
वदेद्यथाश्रुतार्थं तत्कृतं शोभाकरं भवेत् ।
नो चेदसौ हास्यपात्रं स्यात्सुधीगर्हितोऽपि वा ॥ ३४ ॥
नूत्नवैदेशिकज्ञानविज्ञातस्तत्क्रियाविधिः ।
आग्नेयाग्न्यम्बुवस्तुभ्यामिदमुत्पन्नमित्यपि ॥ ३५ ॥

किञ्च—

अपश्यन्त्वेतिमन्त्रस्थरयिसाधनकर्म वा ।
त्वया ज्ञातन्नु तद्यत्नः क्रियतां बुधसेवया ॥ ३६ ॥
अग्निना रयिमित्यादि श्रुत्युक्तं कर्म किं त्वया ।
कृतं रयिश्च संप्राप्तः साधो साधु विचिन्त्यताम् ॥ ३७ ॥

---

(१) **आत्मावबुद्धये**—आत्मज्ञानार्थम् । एतदुक्तम् **रसहृदयतन्त्रे**—"स्थिरदेहेऽभ्यासवशात्प्राप्य ज्ञानं गुणाष्टकोपेतम् । प्राप्नोति ब्रह्मपदं न पुनर्भववासदुःखानि" इति । अत्र तावन्न प्रधानं सुवर्णकरणादि—प्रधानं पुनः "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इत्युक्तलक्षणलक्षितरसायनद्वारा देहस्थिरीकरणं तद्वशादभ्यासः तद्वशादात्मावबोधश्च । "न हि देहेन कथञ्चिद्व्याधिजरामरणदुःखविधुरेण । क्षणभङ्गुरेण सूक्ष्मं तद्ब्रह्मोपासितुं शक्यम् ॥" (र. हृ. त. १-१७) एतेन पाश्चात्योक्त chemistry नामकग्रन्थो न हि रसायनशास्त्रपदवाच्यो भवितुमर्हति—अर्हति तु द्रव्यपरिणामशास्त्रपदवाच्यताम् ।

(२) **तच्छक्तिमापकः**—सिद्धरसगतशक्तिमापकः । वेधकर्म तावत् सिद्धरसगतशक्तिमापकत्वेनोपदिष्टं न पुनर्हेमकरणाय । तस्य नश्वरत्वात् । सूचितोऽयमर्थः "वृथा सकलम्" इति **रसहृदय**वचनेन । वेधक्रिया तावत्सिद्धरसगतशक्तिपरिमितिपरीक्षणार्थमित्यवगन्तव्या । तद्यथा—एकतोलकप्रमाणं ताम्रादिक्षुद्रधातुं सुवर्णीकर्तुं प्रयुज्यमानसिद्धरसपरिमितिरेव देहवेधं कुरुत इति ।

(३) **आग्नेयाग्न्यम्बुवस्तुभ्याम्**—electron, proton वस्तुभ्याम् । एतद्वस्तुद्वयजातं सुवर्णमिति ज्ञानमस्मदीय-**आयुर्वेदतत्त्वविवेके** द्रष्टव्यम् ।

(४) **अपश्यन्त्वेतिमन्त्रस्थ**—"अपश्यन्त्वा मनसा...इह प्रजानमिह रयिं रराणः" (मन्त्रप्रश्नम्) इति मन्त्रस्थमित्यर्थः ।

(५) **क्रियताम्**—रसतन्त्रपरिशीलनेन क्रियतामित्यर्थः ।

(६) **अग्निना रयिम्**—"अग्निना रयिमश्नवत् । पोषमेव दिवे दिवे ।" (तै. सं. ३-१) ।

अथ वेदस्य छन्दस्त्वं दर्शयति—

छादयन्तीति छन्दांसीत्युक्त्युक्त्युरातिलक्षणः ।
वेदोऽतस्तत्र सर्वत्र रहस्यानि पदे पदे ॥ ३८ ॥

बहुप्रयाससाध्यानि शमादिगुणसम्पदा ।
गुरोः कटाक्षसन्तत्या निर्मत्सरधियापि च ॥ ३९ ॥

न धाष्टर्यसाध्यान्येतानि पश्याण्वस्त्रक्रियाविधिः ।
कैश्चिदेव हि विज्ञातस्तन्नाम त्वतिविश्रुतम् ॥ ४० ॥

रहस्यरक्षणं त्वेवं सर्वथा सार्वकालिकम् ।
नात्र स्पर्धाकरश्शास्त्रमर्यादाज्ञो विचक्षणः ॥ ४१ ॥

अथ बुद्धिमत्कर्तव्यं विवृणोति—

धीमांस्तु तद्विविच्याथ गुरूक्तविधिना धिया ।
प्रवृत्तस्तत्फलं सम्यङ्लभते वत्स निर्मलम् ॥ ४२ ॥

अथ गुरोरावश्यकतां व्यनक्ति—

प्रतारणार्थकेऽर्थेऽस्मिन् प्रकटार्थे विरम्यताम् ।
गुरुमाश्रित्य गुप्तार्थलब्धये यत्नमाचर ॥ ४३ ॥

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।"
इति गीतावचोऽजस्रं स्मर वेदानुशासनम् ॥ ४४ ॥

अथ नूत्नार्थप्रेयसां प्रीत्यै वक्ष्यसीति काकाह—

यद्वा ज्ञात्वापि वेदस्य तत्त्वार्थं वत्स भाषसे ।
नूत्नार्थप्रेयसां प्रीत्यै तथा कुर्वन्ति केचन ॥ ४५ ॥

यथा—

वैवाहिकविधिः प्राच्यः पुराणोऽप्यरुणोपमः ।
वैदेशिकानां हृत्पद्मान्विकासयति देशतः ॥ ४६ ॥

---

(१) अण्वस्त्रक्रियाविधिः—Atom Bomb रचनाविधिरद्यतनकालीनः ।

पाश्चात्यपद्धतिस्नानवस्त्रभुक्त्याऽधुनातना ।
भारते रुचिमाधत्ते नूत्नं हि कुरुते रुचिम् ॥ ४७ ॥
एवं नवरसोत्पत्त्यै कृतं चेल्लौकिकं त्वलम् ।
न वैदिकं तथा कार्यम् तद्धर्मस्तु सनातनः ॥ ४८ ॥

अथोक्तार्थस्य प्रापञ्चिकत्वात्तदपेक्षया श्रेष्ठतरं तत्त्वमुपदिशति—

त्वं त्वद्रूपं विजानीहि त्वद्भिन्नं न हि कुत्रचित् ।
दृश्यतेऽतस्त्वत्कृता हि गर्हणा त्वयि सज्जति ॥ ४९ ॥
न साधुसंमता तादृक्फक्किका तामतो जहि ।
लोकरक्षणदीक्षायां बुद्धिमान् बद्धकङ्कणः ॥ ५० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते वेदगुप्तार्थदीपिका नाम
त्रयोदशबिन्दुः



---

(१) नूत्नं हि—'नवनवगुणरागः प्रायशो लोक एव' इत्यभियुक्तवचनान्नूत्नं रुचिकरं भवतीति भावः ।

(२) त्वद्रूपम्—"तत्त्वमसि" इत्यादिमहावाक्योपदिष्टरूपमित्यर्थः ।

16

श्रीः

# श्रीकृष्णचरितं नाम चतुर्दशो बिन्दुः

चोरो जार इति प्रेम्णा श्रीकृष्णं स्तौति कश्चन ।
अनौचित्यमनालोच्य लोकहानिकरं परम् ॥ १ ॥

लोकेऽस्ति कीदृशी कृष्णस्यास्था तेनैव सा स्मृता ।
मम वर्त्मेत्यादिवाग्भिरसौ गोपालको यतः ॥ २ ॥

नृणामादर्शभूतोऽसौ स्वमार्गस्यानुयायिनाम् ।
मम वर्त्मानुवर्तन्ते मनुष्या इति च स्मरन् ॥ ३ ॥

भीतिमांश्चाभवत्कृष्णो न कुर्यां कर्म चेदहम् ।
उत्सीदेयुरिमे लोका इति सोऽसत्कथं चरेत् ॥ ४ ॥

मृतजातोज्जीवने या प्रतिज्ञा भारते कृता ।
कृष्णेन स्वैकधर्मत्वशपथेन परीक्षितः ॥ ५ ॥

तया कृष्णो जारदोषास्पृष्टस्स्यात्सुतरामिति ।
बालोऽपि ज्ञातवांस्तस्मादसावल्पो हि चिन्त्यताम् ॥ ६ ॥

तादृक्फल्गुवचोभिस्तु तत्त्वज्ञानी कथं भवेत् ।
अतत्त्ववित्कथं मुक्तो जीवस्संसारबन्धनात् ॥ ७ ॥

---

(१) **मम वर्त्मेत्यादिवाग्भिः**—" मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥ " (भ. गी. ३-२३, २४)

(२) **असत्**—चोरजारादिकृतासत्कर्मेति भावः ।

(३) **स्वैकधर्मत्वम्**—स्वावस्थितधर्ममुख्यत्वमित्यर्थः । तथा चोक्तम्—" यथा मे दयितो धर्मः ब्राह्मणस्य विशेषतः । अभिमन्योः सुतो जातः मृतो जीवत्वयं तथा ॥ " " यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ । तथा मृतशिशुरयं जीवतादभिमन्युजः ॥ " (म-भा-आश्व-अनुगीता-अ-६९-२०, २२) इति ।

(४) **तस्मात्**—तादृशबालकादित्यर्थः ।

(५) **असौ**—श्रीकृष्णे जारत्वगुणदर्शीत्यर्थः ।

तद्बन्धहानये कृष्णः कर्मयोगमुपादिशत् ।
अकर्मकर्मणोर्भावं बन्धकत्वं च कर्मणः ॥ ८ ॥

लीलाकृतमिदं बाल्य इति चेत्सद्भवतः ।
मात्रे स्वरूपं देवक्यै दर्शितं सूतिकागृहे ॥ ९ ॥

ततो मनुष्यसामान्यो नासावित्यवधारणात् ।
न न्यूनतात्र कर्तव्या मनुष्येष्विह धीमता ॥ १० ॥

किञ्च स्वयमवादीच्च स्वस्मिन् ज्ञानं स्वजन्मनाम् ।
संहारः पूतनादीनां बाल्य एव धिया कृतः ॥ ११ ॥

एतादृङ्महिमा कृष्णश्शुद्धः परमपावनः ।
चौर्यादिनीचकर्माणि कथं कुर्याद्विचिन्त्यताम् ॥ १२ ॥

श्वभ्य इत्यादिना कुत्राप्यसन्नेति वदेद्यदि ।
तद्भावनामात्रयोग्यं सर्वान्नानुमतिर्यथा ॥ १३ ॥

किञ्चोपास्योपासकत्वद्वैतं भक्त्यां तु भासते ।
तदैव स्तुतिसन्दर्भः तन्नीचोक्तीस्स्तुतौ त्यजेत् ॥ १४ ॥

---

(१) **अकर्मकर्मणोर्भावम्**—"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः । स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥" (भ-गी-४-१८) इत्युक्तविधिना दर्शित-कर्माकर्मणोर्भावमित्यर्थः ।

(२) **बन्धकत्वम्**—"यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।" (भ-गी-३-९) इत्यादिना दर्शितं बन्धकत्वं कर्मण इत्यर्थः ।

(३) **स्वस्मिन् ज्ञानम्**—"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥" (भ-गी-४-५) इत्यादिनेत्यर्थः ।

(४) **श्वभ्य इत्यादिना**—"श्वभ्यः श्वपतिभ्यश्च वो नमः" इति रुद्रपाठात् सर्वं सदेवेति भावनयेति भावः ।

(५) **सर्वान्नानुमतिः**—उत्तरमीमांसायाम् "न च श्वादिमर्यादमन्नं मानुषदेहे-नोपयोक्तुं शक्यते, शक्यते तु प्राणस्यान्नमिदं सर्वमिति चिन्तयितुम्" (ब्र-सू-भा-३-४-२८) इति शाङ्करोक्तेः भावनामात्रयोग्यमिति पूर्वेणान्वयः ।

यद्वा भक्त्यतियोगेन द्वैतनाशोऽनुमीयते ।
तथा स्तुतीनां का वार्ता स्तोतृस्तुत्याद्यसम्भवात् ॥ १५ ॥

तन्नाश्लीलं वदेद्विद्वान् स्वतन्त्रो देवतां प्रति ।
स्मरन्नाश्लीलमित्यादिश्रुतिं चात्यन्तिकं सुखम् ॥ १६ ॥

भक्त्यान्यपरवशो भक्तस्त्वेवमाहेति नो वदेत् ।
पराधीनवचो न स्यात्प्रमाणं धीमतां सताम् ॥ १७ ॥

सुरादिभ्रष्टचित्तानामविवेकवतां वचः ।
काव्येषु लालितं लोके विदूषकमुखेषु च ॥ १८ ॥

एतादृग्दोषयुक्ता चेद्भक्तिर्नो तारिका भवेत् ।
दारिकेव दुराचारा तस्माच्छुद्धां समाश्रयेत् ॥ १९ ॥

---

(१) **स्तोतृस्तुत्याद्यसम्भवात्**—"चोद्यं वा परिहारो वा क्रियतां द्वैत-भाषया । अद्वैतभाषया चोद्यं नापि चास्ति तदुत्तरम् ॥" (वेदान्तपञ्चदशी २-३९) इत्युक्तेः ।

(२) **स्वतन्त्र**—सुरापानादिमत्तो अस्वतन्त्रः, तद्भिन्न इत्यर्थः ।

(३) **नाश्लीमित्यादि**—"ब्राह्मणो वै सर्वा देवताः । सर्वाभिरेवैनं देवताभि-रुद्धरति । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति । तस्माद् ब्राह्मणेभ्यो वेद-विद्भ्यो दिवे दिवे नमस्कुर्यात् । नाश्लीलं कीर्तयेत्" इति श्रुतिस्तावत् ब्राह्मणस्य देवता-मयत्वेनैव हि तं प्रति निषेधत्यश्लीलकीर्तनम् । तस्मात् सर्वथा नाश्लीलं कीर्तयेत् देवतां प्रतीति भावः ।

(४) **आत्यन्तिकम् सुखम्**—परं ब्रह्मेत्यर्थः । तस्य मुक्तिहेतुत्वादिति भावः ।

(५) **सुरादि**—मद्यप्रभृति । अत्रादिपदेन स्त्रीत्यागोन्माद इत्याद्यनर्थदशा-स्स्मर्यन्ते ।

(६) **शुद्धाम्**—निर्मलाम् । "यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः । सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥" (भ-गी-१२-१५, १६) इत्यादिनोद्वेगादि-दुर्गुणनिरसनपूर्वकं अनपेक्षत्वशुचित्वादिसुगुणविशिष्टत्वं भक्तस्य लक्षणत्वेनोपवर्णितं भगवता श्रीकृष्णेन । जारत्वचोरत्वादीनां तावल्लोकोद्वेगकरत्वं प्रसिद्धमेव हि । अतस्तेषा-मुक्तभक्तलक्षणाविरुद्धत्वं च । तस्मात् एतादृशदुष्टलक्षणशून्यां शुद्धामिति भावः ।

धर्माविरो[illegible]विनि मनाक्[illegible]
  जारत्वमप्यात्मनि नैव दोषः ।
वरानुरुद्धं हि तदस्य कृष्णं
  ज्वरे सुगन्धादनवद्य[illegible]म् ॥ २० ॥
अत्रेन्द्रवज्राऽऽनदोषशङ्का
  ह्युपेन्द्रवज्राहतरूपरूपा ।
तस्मात्तदीयोऽत्र तु वर्तनेऽस्ती-
  त्यल्पोऽपि दोषः कथितुं न शक्यः ॥ २१ ॥
जारचोरपदपङ्किलदेहं
  राहुदष्टशशिचुम्बनिकाशम् ।
तत्त्वजातरसमज्जनपूतं
  हन्ति कृष्णचरितं भवबन्धम् ॥ २२ ॥

---

किञ्च- "धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।" (भ-गी-७-११) इति भगवदुक्तौ कामस्य धर्माविरुद्धत्वोपदेशात्—जारत्वस्य तु तद्विरुद्धत्वमुपपन्नम् हि । एतादृशदोषशून्यां निर्मलां भक्तिं समाश्रयेदित्यन्वयः । अपि च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।" (भ-गी-४-११) इति, "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विद-धाम्यहम् ॥" (भ-गी-७-२१) इति, "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥" (भ-गी-८-६) इति च स्मृतेः जारचोरादिरूपेण सेव्यमानाद्भगवतः फलमपि जारत्वादय एव-न तु मुक्तिहेतुकं ज्ञानम् । तथा चोक्तं स्मृत्यन्तरे "यादृशी भावना यस्य सिद्धिर्भवति तादृशी" इति । अत उक्तदोषशून्यां सद्भावभाविता-मेव भक्तिमाश्रयेदिति भावः ।

(१) वरानुरुद्धम्—गोलोकवासिना कृष्णेन राधिकायै वरो दत्तस्तवाहमेव जारो भवयेमिति--तथा च ब्रह्मवैवर्तदर्शनात्तदनुरुद्धमित्यर्थः ।

(२) तत्त्वजात—तत्+तु+अजात इति विभागः कर्तव्यः । अत्र तु-शब्दोऽवधारणे—तत्-पदं जारत्वादिदोषदूषितं श्रीकृष्णचरितं परामृशति । अतस्तदेव कृष्णचरितमुक्तविधिना निर्मलभक्तिभावितं सत् अजातरसमज्जनपूतं चेद्भवबन्धं हन्ती-त्यन्वयः । यद्वा तत्त्वजातरसमज्जनपूतम्—तत्त्वज्ञानसञ्जनितब्रह्मानन्दरसेन संस्कृतत्वात् पूतं चेदित्यन्वयः ।

(३) अजातरसमज्जनपूतम्—अजातरसः शान्तरसः, तस्य अव्यक्तत्वात्

तथा यदि न संस्कृतं तदपि कृष्णचारित्रकं
निगूढदशनोज्ज्वलन्मकरतुल्यबाधाकरम् ।
चलच्चपलमानसान्निखिलजीवदन्तावलान्
निमज्जयति वारिधौ विषयभीमयादोनिधौ ॥ २३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराज-
मानश्रीविद्याशङ्करपदमावेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते श्रीकृष्णचरितं नाम
चतुर्दशबिन्दुः

---

शृङ्गारादीनां व्यक्तानामुत्पत्तिलयहेतुत्वाच्च तेषां तदुपादानं भवति । "यद्धि यस्मादुत्पद्यते यस्मिंश्च प्रविलीयते तत्तस्योपादानम् (भवति)" इति शाङ्करोक्तेः तादृशाव्यक्तशान्तरसस्य निर्दुष्टत्वात्तन्मज्जनेन (तत्स्नानेन) तत्प्राचुर्येणेति यावत् । शान्तरसप्रायमित्यर्थः । अत एव पूतम्—पवित्रमिति भावः ।

यद्वा; 'रसो वै सः' इति श्रुतेः रसो नाम परमात्मा तस्य जातत्वं तावत् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा-उ-६-३) "तदैक्षत बहु स्यां प्रजायेय" (छा. उ-६-२) इत्यादिश्रुत्युपपादितं तदभाववान् अजातरस इत्युच्यते । तथा च श्रूयते "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥" इति । अत्र पूर्णात्पूर्णोदञ्चनरूपक्रियाविशेषसद्भावेऽपि पूर्णावशेषरूपवैचित्र्यविशेष एव अजातत्वमात्मनो व्यनक्ति । तथाविधाजातरसे ब्रह्मणि मज्जनेन स्नानेन । अत्र ब्रह्मणि स्नानं नाम ब्रह्मप्रतिपादकज्ञानाऽऽवृतत्वम्—तद्ज्ञानप्राचुर्यमिति यावत् । अत एव पूतम्-पवित्रमित्यर्थः । तद्विशिष्टो ज्ञानी भवति । एतादृशं ज्ञानिनं प्रशंसति शान्तियुतं च गीतासु—"आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥" (भ-गी-७-१६,१७) "नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभावयतश्शान्तिरशान्तस्य कुतः सुखम् ॥" (भ-गी-२-६०) इति । एतादृशादृष्टविषयेषु शास्त्रमेव प्रमाणं तत्र न संशयः कार्यं इत्युद्घोषयति च । "श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥" (भ-गी-४-३९, ४०) इति ।

श्रीः

## कालिदासवयोजन्मभूमिविमर्शो नाम पञ्चदशो बिन्दुः

(मेघदूतविशेषस्थलविशिष्टव्याख्या)

प्रथमसर्गे प्रथमश्लोकः 'कश्चित्कान्ते'ति—स्वाधिकारात्प्रमत्तः कश्चिद्यक्षः—अव्यक्तनामरूपादिमान् पुरुषः कालिदास इति यावत्—एतत्काव्यस्य तच्चारित्रबोधकत्वात्। कान्ताविरहगुरुणा—पत्नीवियोगदुर्भरेण। वर्षभोग्येण—वत्सरकालभोग्येनेत्यापातश्रुतार्थः। गूढार्थस्तु—अष्टादशशतवत्सरात्मककालभोग्येनेत्यर्थो वक्तव्यः। तद्यथा—"वर्गाक्षराणि वर्गेऽवर्गे" इत्यार्यभट्टसूत्रदिशा वर्षपदस्थवकाररेफषकाराणां क्रमेण षष्टि—चत्वारिंशत्—अशीति-(६०+४०+८०) रित्यर्थः—तन्मेलनेन अशीत्युत्तरशतं भवति। एतावत्परिमितकालभोग्य इति वर्षभोग्यपदार्थे सिद्धे; तस्य कान्ताविरहगुरुणेति विशेषणसद्भावात्—कान्तायाः पुनः; "दशास्यां पुत्रानाधेहि" इति श्रुत्या दशभोग्यांशविशिष्टत्वेन वर्षभोग्यपदान्तर्गतभोग्यपदस्यैकांशमात्रसूचकत्वेन चात्र वर्षपदवाच्याशीत्युत्तरशतं तावद्दशगुणितमवश्यं कार्यमेव। एतेन वर्षभोग्यपदार्थस्तु अष्टादशशत(१८००)परिमितवत्सरभोग्य इत्यवधेयः। परन्त्वेतन्निर्दिष्टशापकालस्य तृतीयांशद्वयमात्रमेव ($\frac{2}{3}$) भवति। "शेषान्मासान् गमय चतुरो लोचने मीलयित्वा" इति वक्ष्यमाणमासचतुष्टयस्य आपातश्रुतार्थभूतवत्सरबोधकवर्षतृतीयांशत्वात्।

किञ्च; राक्षसकाव्यचरमश्लोकस्थदिनपदार्थोऽपीममेवार्थमनुकरोति। नन्वत्र दिनपदार्थावगतकालस्य विंशतिवत्सराधिकत्वेन पुरोक्तवर्षभोग्यपदोपदिष्टकालतौल्यं नोपपद्यत इति चेन्नायं दोषः—उक्तार्थविशिष्टवर्षभोग्येण शापेन महिम्नोऽस्तङ्गमनकरणभूतेनास्तङ्गमितमहिमा सन्निति विधेयविशेषणसद्भावाद्यक्षस्य रामगिर्याश्रमेषु वसतिकरणसमये तावत् शापभुक्तकालमात्रं सूचयत्यत्र वर्षभोग्यपदम्। अतःपरं स्निग्धच्छायातरुष्विति विशेषणोपदिष्टसुखदातृत्वधर्मिषु जनकतनयास्नानपुण्योदकेष्विति पदसूचितपवित्रगुण -

विशिष्टेषु रामगिर्याश्रमेषु विंशतिवत्सरकालावध्युवास यक्ष इति राक्षसकाव्योक्त-दिनपदेनावगन्तव्यम् । अतो द्वयोरुक्तार्थयोर्न विरोधः—सौलभ्यमस्त्येव ।

अपि च एवं विंशतिवर्षकालावधिरामगिर्याश्रमेवासादुत्पन्नपुण्यवशादेव 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' (मे-दू-२-५) इत्युक्तलक्षण-लक्षितस्यापि (विवेकशून्यस्यापि) तस्य पत्नीं प्रति सन्देशप्रेषणात्कण्ठोत्पन्नेति समुचितोऽयं विषयः ।

ननु पुरोक्त'दशास्यां पुत्रानाधेही'ति श्रुत्या कान्तायाः दशभोग्यांश-विशिष्टत्वं कथमिति चेदुच्यते ; पतिरेव पत्नीगर्भाशये रेतोरूपेण प्रविश्य गर्भो भूत्वा जनिष्यति ; तदा तस्य सा माता भवति । तथा च श्रूयते "पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्" इति । अत एव सा पत्नी "जायते पतिरस्या"मिति व्युत्पत्त्या जायापदसंज्ञिता भवति । एतेन "आत्मा वै पुत्रनामासि" इति श्रुत्या च पितृपुत्रयोस्तौल्यं संपद्यते । तदा सा (पत्नी) पुत्रं प्रत्यभोग्या हि ; अतस्तद् दृष्ट्वा तत्तुल्यपतिं प्रत्यप्यभोग्या भवेदेव—न तथा दृश्यते लोके—पत्युरेकस्यामेव बहुपुत्रजनकत्वदर्शनात् । यद्वा पितृ-तौल्यसद्भावात्पुत्रस्यापि सा भोग्या भवेत् न तथा दृश्यते—अनौचित्य-प्रसङ्गात् । एवं सति बहुपुत्रजनकत्वमेकस्यां कथं सम्भवितुमर्हतीति विचि-कित्सायां "दशास्यां पुत्रानाधेहि" इति श्रूयमाणश्रुत्या एकस्यामेव पुंसः (पत्युः) दशभोग्यांशा अनुगृहीता इति विज्ञायते । तेनैकैकपुत्रजननायैकैकांश उपयोज्य इति पुरोक्तदशास्यामिति श्रुतिर्विदधातीति ज्ञेयम् । किञ्चेममर्थं स्मारयति नृसिंहसाङ्ख्यदर्शनोक्तपूर्णसहितनवाङ्कनिरूपितदशवस्त्वात्मक—आत्मोपहितप्रकृतिरूपपदार्थजातम् । एवं पुमानवतरिष्यति स्त्रियां मूलप्रकृति-रूपायां दशधा—विष्णुरिव मायामयजगत्याम् ; तस्य (पुंसः) विष्णुप्रतीकत्वा-देतद्दशावतारसूचकमेव दशांशगणितं लघुतमार्घगणितम् च । एवमात्मनो दशधावतरणानन्तरं भोग्यांशाभावात् तस्यास्स एव पतिरेकादशः पुत्रो भवेदिति

---

(१) लघुतमार्घगणितम्—Logarithm.

विद्यते श्रुतिखण्डः 'पत्निमेकादशं कृधि' इति । अतः दशपुत्रजननानन्तरं पत्युः पत्नी मातृसमेति विज्ञायते । अत्र दशपुत्रपदस्य— पुत्री च पुत्रश्च पुत्रावित्येकशेषनियमानुरोधेन दशसन्ततिरित्यर्थो वक्तव्यः ।

नन्वत्रापातश्रुतवर्षपदार्थभूतवत्सरपरिमितशापे तावत् किञ्चिदधिकाष्ट-मासात्मककाल एव भुक्तः—तृतीयांशकालो ऽवशिष्टः । भुक्तकालपरिमिति-र्भौममानेन दिनपरिमित(१८२०)वत्सरा इति निरूपिता—तदा पूर्णवत्सरस्य तु खद्वयभपरिमित(२७००)वत्सरात्मिका स्यात् । तस्मात् देवमानेन (कौबेरमानेन) तुलितुं नोपपद्यते; तस्य (देवमानस्य) खद्वयरसगुण(३६००)-वत्सरपरिमितत्वादिति चेदुच्यते—

शापस्तावद्बन्धरूपः—तस्य स्वेच्छानिरोधकत्वात् । तादृशबन्धो मातृ-गर्भे किञ्चिदधिकखभमित(२७०)दिनरूपः खल्वेकगर्भस्य । स दशगुणित-स्सन् दशगर्भाणां संपद्यते बन्धः—तावतैव स्त्रियां संसारस्य पर्याप्तत्वात्त-द्बन्धस्यापि पूर्णताङ्गीक्रियते तावतैव—तेन पूर्णकालांशात्मको वत्सरो गृहीत-श्शापपरिमितौ । अतः तदवशिष्टतृतीयांशशापकाल एव "श्रुत्वा वार्तां जलद-कथितां तां धनेशोऽपि सद्यः शापस्यान्तं सदयहृदयः सन्निधायास्तकोपः" (मे·दू-२-५७) इत्युक्तेः परिमार्जनीयः—तस्यैव; आपातश्रुतवर्षीयचतुर्मास-परिमितत्वोपपत्तेः; 'शेषान् मासान्' इत्याद्युक्तः स एवात्र परिमृष्टो दयावशंवदेन कुबेरेण । भौमवत्सरः पुनः देवमानेन (कुबेरमानेन) दिनमेकं भवतीति सुवि-दितोयं विषयः । अतस्समीचीनमेतत्सर्वमिति दिक् ।

अथ 'तस्मिन्नद्रौ' इत्यादिप्रथमसर्गीयद्वितीयश्लोकः । अत्रायं विशेषः —"आषाढस्य प्रथमदिवसे" इत्यत्र 'प्रशमदिवसे' इति केचित्पाठं कल्प-यन्ति । एतदुभयान्यतरपक्षगणनयापि "शेषान् मासान् गमय चतुरो लोचने मीलयित्वा" (मे·दू·२-२६)—"शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" (मे·दू·२-३१) इति वक्ष्यमाणश्लोकखण्डद्वयेन आषाढशुक्लै-कादशीप्रभृति कार्तिकशुक्लैकादशीपर्यन्तं भाविमासचतुष्टयमानसिद्ध्यभावात्—अत्रोक्तप्रथमदिवसपदेन कर्कसंक्रान्तिदिवसो ग्राह्यः तत्सापेक्षत्वादाषाढस्य ।

तत्संक्रान्तिस्तावत् शुक्लैकादश्यां भवितुमर्हति । तथा चेद्वक्ष्यमाणमासचतुष्टय-मानमुपपन्नं भवेदेव । अतोऽत्र प्रथमदिवसपाठ एव साधीयान् ।

उक्तार्थः श्लोकद्वयेनोच्यते

सौरोपजीव्यता चान्द्रे तदभावेऽधिमासता ।
ततः चान्द्रेऽपि च संक्रान्तेरारम्भो दृश्यते क्वचित् ॥
धनुर्मासव्रतारम्भो मार्गशीर्षे यथाऽभवत् ।
तथात्र दिवसो ग्राह्यः प्रथमो मेघदर्शने ॥ इति ।

किञ्च—

संक्रान्तिप्रतिपत्संज्ञौ मासि मासि तदाऽऽदिमौ[1] ।
अधिके प्रतिपन्मात्रं क्षये तद्युतिसंक्रमौ[2] ॥

अथ प्रथमसर्गीयषोडशश्लोके विशेषः—

अत्र "किञ्चित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण" इत्यस्यायमर्थः । एतत्पूर्वश्लोके तावत् 'उत्पतोदङ्मुखः खम्' इत्युक्तत्वात् तद्रामगिरौ तथा-वस्थितं (उत्तराभिमुखम्) मेघं प्रार्थयत्यनेन 'किञ्चित्पश्चात्' इत्यादिश्लोक-खण्डेन । अत्र पश्चाद्गमनं नाम रामगिरेर्दक्षिणदिग्गमनमेव—मेघस्योत्तराभि-मुखत्वात् । किञ्चित्पदं मालगिर्योरन्तरं पादमितमर्धमितं वा योजनं भूयादिति अर्थं द्योतयति । 'भूय एवोत्तरेण' इति पदं तु रामगिरेरारभ्यालकावधि वक्ष्यमाणमार्गस्योत्तरत्वात् तन्मुखत्वं द्योतयति । तथा तस्य (उत्तरगमनस्य) मुख्यत्वे सिद्धे पश्चाद्गमनस्यामुख्यत्वं सिद्धम् । तादृशाऽमुख्यगतिप्रेरणं तावदमार्गस्थम् उज्जयिनीवत् विशेषातिशयशून्यं क्षुद्रमालं प्रति कुत इति विचारिते 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इत्यभियुक्तोक्तिदर्शनात्त-त्तस्य कालिदासस्य जन्मभूमिरिति ज्ञायते नो चेत्तत्प्रेरणासम्भव इति वेदित-व्यम् । अन्यत् सुगममिति ।

---

(१) तदाऽऽदिमौ—तस्य मासस्यादिमावित्यर्थः ।

(२) तद्युतिसंक्रमौ—तयोः संक्रान्तिप्रतिपदोः युतिः तद्युतिः । सा च संक्रमश्च तद्युतिसंक्रमाविति समासः । एतेन 'आषाढस्य प्रथमदिवसे' इत्यत्र प्रथमदिवसस्य सौरत्वोपपत्त्योक्तं सर्वमनवद्यम् ।

किञ्च आर्यभटपथा वर्षसहस्र अशीत्युत्तरशतम् (१८०) इति, विक्रमस्य विंशत्यधिकाष्टादशशत (१८२०) इत्यादिगूढार्थपद्धतिं यथा व्यपदेशेन कश्चिदिति व्यपदेशेन च मेघदूते राक्षसकाव्ये च स्वात्मचरितमेवोक्तवान् कालिदास इत्यत्र किमिति प्रकटतरं नाभिमाषते इति केचित्तु:। अत्रोच्यते; अस्ति कारणम्—यथाचरितस्यापि कथने स्वचरितं स्वस्यातिशयद्योतकान्याविर्भविष्यन्त्यवश्यं कतिचित्पदानि—तान्यात्मश्लाघाप्रतिनिधीकृतानि भवेयुः। दृश्यतां महाभारते कर्णपर्वणि गाण्डीवदूषणकृते धर्मराजं हन्तुकामाय पार्थायोपदिष्टं श्रीकृष्णेन 'महतां निन्दा तद्धननसमम्' इति, 'आत्मस्तुतिरात्महत्यासमम्' इति च।

किञ्च; अभिवादनसमये स्वातिशयद्योतकप्रवरोक्तौ स्वश्रोत्रपिधानं प्रसिद्धमेव। अपि च पुरा किल भोजसभाऽऽगतक्रीडाचन्द्रनामविचारे तथा-वद्गूढतरं—

"च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
संमं चक्रीकृत्य प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु गिरिशः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः॥"

इति बभाणेत्यनुशुश्रुम। एतच्च—

"हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्धालुश्चेदहह कविना वश्यवचसा।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः॥" इति,

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥ (मालतीमाधवम्)

इत्यादिभिर्भवभूतिरुद्धतकविरिति विज्ञायते। तादृशस्य कदाचिदुचितं भवे-त्प्रकटाभिभाषणं स्वचारित्रे—नायं खलु कालिदासस्तथाविधः यतः—

"क सूर्यप्रभवो वंशः क चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥" (रघुवंशम् १-२) इति,

"कुलेन कान्त्या वयसा नवेन।
गुणैश्च तैस्तैर्विनयप्रधानैः॥" (रघुवंशम् ६-७९) इति,

"अमूर्तिपङ्क्ता प्राची रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि।
क्षणात्क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते विनयरहितानामिव गुणाः"॥ (प्रभातवर्णनम्)

इत्यादिभिस्तस्य विनयादिगुणसम्पत्तिमत्त्वात्। अतस्तस्य प्रकटाभिभाषणं नोचितं स्वचारित्रे, तदिदमुपपन्नं भवति सर्वमुक्तमिति।

इति श्रीवैद्यवल्लभ-
राज्ञीवेङ्कटाचलपतिप्रसादमहाग्निचियज्वकृतिषु
विमर्शामृते कालिदासवयोजन्मभूमिविमर्शो नाम
पञ्चदशबिन्दुः



श्रीः

# ब्रह्मतत्त्वावबोधविशिष्टसङ्ख्याविशेष्यताविमर्शो नाम षोडशो बिन्दुः

अस्ति सङ्ख्याया विशेष्यविशेषणरूपांशद्वयम् । अत्र द्वितीयं (विशेषणम्) अस्मत्-नृसिंहसाङ्ख्यहृदयेऽभिवर्णितम् ।

प्रथमं तावदत्र विमृश्यते । यथा-"यथासङ्ख्यमनुदेशः समानाम्" (पा-सू-१-३-१०) 'समसम्बन्धी विधिर्यथासङ्ख्यं स्यात्' इति पाणिनिसूत्रवृत्तिनिर्दिष्टसमसम्बन्धित्वं विधेः—सङ्ख्यागतविशेष्यतामात्रनिरूपितं भवति । नेदं केवलम् । स्मार्तेऽप्यस्त्येवं निरूपणम् । यथा—पुरुषसूक्तीयपञ्चदशर्ग्भिरावाहनादिपञ्चदशोपचारकरणम्-तथा श्रीसूक्तेन च प्रसिद्धम् । अत्र ऋङ्मन्त्रार्थस्य तत्कृतोपचारस्य च न कोऽपि सम्बन्धः—विना समसङ्ख्यात्वम् । एतन्न किञ्चिदपि बहिरर्थं द्योतयति विना सङ्ख्यासाम्यम् । स्याद्यदीदं सङ्ख्याविशेषणांशनिष्पन्नमेव तदा तत्तदुपचारमन्त्रार्थयोः योग्यतादिगुणगणोऽवश्यम्भावी । न तथा दृश्यते । अत इदं (समसम्बन्धित्वम्) सङ्ख्याया विशेष्यांशेनैव निष्पन्नम्—न विशेषणांशेन ।

किञ्च; श्रौतप्रक्रियायामपि (महाग्निचयनादिष्वपि) एकजातीयेष्टकानांमध्ये पञ्च-अष्ट-दशादिसङ्ख्याभेदमात्रोत्पन्न-पाङ्क्त-गायत्री-विराट्-इत्यादिछन्दोभेदनिष्पत्तिः—तत्फलभेदश्च श्रूयते-यथा-नानाव्यक्तिगतैकैकाङ्कान् समाहृत्य 'पञ्चाक्षरा पङ्क्तिः' 'अष्टाक्षरा गायत्री' 'दशाक्षरा विराट्' इत्यादिनियमानुरोधेन तस्य (समाहृताङ्कसमूहस्य) छन्दस्त्वं सम्पाद्य तादृश-(केवलसङ्ख्यासंघातात्मक)छन्दसः फलं विदधाति श्रुतिः । यथा—"दश संपद्यन्ते । दशाक्षरा विराट् । विराजेवान्नाद्ये प्रतितिष्ठति ।" (प्रवर्ग्यब्राह्मणम्), "दश दश संपातं जुहोति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे ।" (तै-ब्रा-का-३ प्र-८) इत्यादिना ।

एतादृशं कर्म विशेषणरूपसङ्ख्याभ्यो नोपपद्यते तासां स्वतःसत्ताभावात् —अस्वातन्त्र्याच्च। स्वतन्त्रस्यैव कर्तृत्वं प्रोक्तं पाणिनिना "स्वतन्त्रः कर्ता" (१-४-५४) इति।

जैमिनिरप्येवमाह—"गुणानां च परार्थत्वात्—असम्बन्धः समत्वात्स्यात्" (जैमिनिसूत्रम् ३-१-२२) इति। व्याः—गुणानां विशेषणानां परार्थत्वात्—विशेष्यार्थत्वाद्धेतोरसम्बन्धः परस्परानन्वयः स्यात्। एतेन राजाश्रिताः यथा राजानं प्रधानीकृत्य प्रवर्तन्ते—तथा परस्परमसम्बन्धाश्च भवन्ति—तथा विशेषणानि विशेष्यं प्रधानीकुर्वन्ति। एतेन विशेषणानां विशेष्येणैव सम्बन्धः। सम्बन्धो नाम अन्वयः॥ एतेन विशेषणानां स्वातन्त्र्याभावो निरूपितः। न ह्येतादृश(गुणीभूत)सङ्ख्याभिः निष्पन्नानां पाङ्क्तादिछन्दसामपि कर्तृत्वम्—करणत्वम् वा। तथा सति "छन्दोभिरेवैनं चिनुते" इत्यादिश्रुतीनामानर्थक्यप्रसङ्गः स्यात् क्रियार्थत्वानुपपत्तेः। आह च जैमिनिः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् (जैमिनिसूत्रम् १-२-१ इति। एतेन छन्दोनिष्पादकसङ्ख्यानां विशेष्यत्वमवश्यंभावीति सिद्धम्। अत एव नैघण्टुका अप्येवं भाषन्ते—"सङ्ख्या सङ्ख्येयसङ्ख्ययोः" इति। एतन्नैघण्टुकपदं **नृसिंहसाङ्ख्यदर्शने**ऽप्युक्तार्थावगमायैवोक्तम्।

एतच्च; "एकस्मै स्वाहा—द्वाभ्याँ स्वाहा—त्रिभ्यः स्वाहा" (तै-सं-का-७) इत्यादिहवनमन्त्रेषूक्तैकादिसङ्ख्याश्च विशेष्यरूपाः—स्वतन्त्रा एव—न गुण(विशेषण)रूपाः अस्वतन्त्राः—देवतोद्देशेन तासां (एकादिसङ्ख्यानाम्) गृह्यमाणत्वात्—दिशामिव। दिशां तावत् "नमः प्राच्यै दिशे" "दिग्भ्यः स्वाहा" इत्यादिमन्त्रैः नमस्कारहविर्दानादियोग्यतया ग्रहणं हि।

अन्यच्च; यत्किञ्चिदपि वस्तु सङ्ख्याभेदेनैव भिन्नभिन्नछन्दस्त्वमासाद्य भिन्नभिन्नकार्यं कुरुते यथा—"पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः" इति लोकपाङ्क्तम्, "अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि" इति ज्योतिःपाङ्क्तम्, "आप ओषधयो वनस्पतय आकाश आत्मा" इति भूतपाङ्क्तम्, "प्राणो व्यानोऽपान उदानः समानः" इति वायुपाङ्क्तम्, "चक्षुश्श्रोत्रं मनो वाक्

त्वक्" इतीन्द्रियपाङ्क्तम्, "चर्म मांसँ स्नावास्थिमज्जा" इति धातुपाङ्क्तम्। एवं लोक-ज्योतिः-भूत-वायु-इन्द्रिय-धातुपाङ्क्तानि श्रुत्या निरूपितानि। अत्र लोक-ज्योतिरादिवस्तूनि भिन्नान्यपि पाङ्क्ततां प्राप्नुवन्ति पञ्चसङ्ख्ययैव न वस्तुभेदैः।

अतः "यत्सत्त्वे यत्सत्त्वम्—यदसत्वे यदसत्त्वम् तत्तस्योपादानम्" इति न्यायात् अत्र पाङ्क्तत्वस्य सङ्ख्यैवोपादानं भवति-न वस्तूनि, वस्तूनाममुख्यत्वात्, तानि अक्षराणि वा महाग्निचयने इष्टका वा-अन्यत्रान्यवस्तूनि वा भवन्तु। तेषां विना पञ्चसङ्ख्यां न कुत्रापि पाङ्क्ततासिद्धिः। एवमेवावशिष्टानामपि छन्दसां स्वरूपं वेदितव्यम्। अतः सङ्ख्यैव मुख्यकारणं छन्दसाम्—सङ्ख्यामयान्येव छन्दांसि। तादृशछन्दोमयमिदं सर्वं जगदिति श्रूयते "पाङ्क्तं वा इदँ सर्वम्" इति। अतः कालाकाशादिवत्सङ्ख्यापि विभुत्वादिगुणाश्रया। एतावता जगद्रूपकार्याश्रयत्वेन विभुत्वादिगुणाश्रयत्वेन च सङ्ख्याया द्रव्यत्वं तार्किकदिशापि सिद्धं भवति। एतेन विशेष्यत्वं चोक्तदिशा। अतो न तार्किकोक्तानि नवैव द्रव्याणि किन्तु सङ्ख्याविशेष्यांशरूपमस्ति दशमं द्रव्यमिति वेदितव्यम्।

एतादृशजगदुपादानकारणभूतायाः सङ्ख्यायास्तूत्पत्तिलयौ पूर्णादेवेति तत्सङ्ख्यावर्गनिष्पत्तिविमर्शनेनावगम्यते। तन्निष्पत्तिस्तु जगदुपादानभूतचान्द्र-सौरकलाप्रतीकानां विषम-सम-सङ्ख्यारम्भकसङ्ख्यानां सृष्टिप्रतीकवर्गान्तराणि द्योतयच्चमकपाठादवगम्यते। तद्विस्तृतिमग्रे निरूपयिष्यामः।

किञ्च, स्वातन्त्र्यं खलु सर्वत्र विशेष्याणामेव न विशेषणानाम्। तथा तन्त्रान्तरे—"गुणा गुणाश्रया नोक्ता" (च-सू-स्था-२६-३४) इति। अत्र गुणानामनाश्रयत्वमस्वातन्त्र्यादेव। तथा च "द्रव्याश्रयगुणवान् संयोगविभागेष्वकारणमनपेक्ष" (वै-सू-प्र-आ-सू-१६) इति द्रव्याश्रयत्वमगुणवत्त्वं च गुणानां निरूपितम्। एतेन गुणानामस्वातन्त्र्यं प्रसिद्धं भवति। अपि च—

"गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये।
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः॥ (वा-सू-९ अध्यायः)

इति वाग्भटोक्त्या "रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः । तत्राद्या मारुतं घ्नन्ति" (वा-सू-१ अध्यायः) इत्यादिस्थलेषु दृश्यमानरसादिगुणकर्तृत्वं निरस्तमौपचारिकमिति । एतेन कादाचित्कपक्षो(ऊह्यापक्षो)ऽप्यपास्तः ।

अतश्च जगत्कारणविचारे 'प्रकृतिः कर्त्री' इति प्रधानकारणवादः श्रीमत्पूज्यपादैः शङ्करभगवत्पादैः निराकृतः प्रकृतेरस्वातन्त्र्यं निरूप्यैव । यथा "यदि वयं स्वतन्त्रां काञ्चित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम ; प्रसञ्जेम तदा प्रधानकारणवादम् । परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा । सा चावश्याभ्युपगन्तव्या—अर्थवती हि सा । न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति ; शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः" (ब्र-सू-भा-१-४-३) इति । तदेवात्र[1] "एकस्मै स्वाहा" इत्यादिस्थलेऽपि सङ्ख्याविशेषणांशविषय एव प्रसज्जते न पुनर्विशेष्यांशविषये । तस्य (विशेष्यांशस्य) द्रव्यत्वेन तदनुयोग्यदेवताऽधिष्ठानत्वेन च तदसम्भवात् । एतदर्थविधायक एवायं "एकस्मै स्वाहा" इत्यादिमन्त्रपाठः । एतादृशसङ्ख्याविशेष्यांशविषयतयैव प्रवृत्तस्य "एका च मे.... चतस्रश्चमे" इत्यादि विषमसमसङ्ख्योपक्रान्तचमकपाठस्य जगद्रचनाहेतुभूतचन्द्रसूर्यकलारूपद्रव्यविशेषणतासूचकत्वयोग्यत्वेऽपि तत्कलानां जलीयाग्नेयतैजसाणूनामिव सङ्ख्याविशेष्यांशभेदस्यैव जगन्नानावैचित्र्यकारणत्वात् तादृशसङ्ख्याभेदहेतुकघात[2]निष्पत्तिं विदधाति चमक पाठः । यथा "एका च मे तिस्रश्च....त्रयस्त्रिंशच्च मे" इति सप्तदशमन्त्रखण्डाः अकारादिस्वरानुविद्ध-अमृतादिचन्द्रकलाजन्यसृष्टिबोधकवर्गान्तरप्रतिपादका भवन्ति । "चतस्रश्च मेऽष्टौ च मे....अष्टाचत्वारिंशच्च मे" इति द्वादशमन्त्रभागास्तु कादिभान्तचतुर्विंशतिस्पर्शवर्णेषु द्विद्विवर्णानुविद्ध-तपिन्यादिद्वादशसौरकलाजन्यसृष्टिबोधकवर्गान्तरप्रतिपादकाः । एवमुक्तवर्गान्तरेभ्यः साध्या भवेयुः पूर्वोत्तरवर्गाः । तत्सूत्राणि ब्रूमः यथा—

**सौरे विषमत्यागः द्विद्विवर्णानुविद्धत्वात् कलानाम् ॥ १ ॥**

व्या—सूर्यकलासम्बन्धिवर्गप्रस्तावे विषमाङ्कानां-एक-द्वि-त्रि-चतुः-पञ्च-

(१) तदेव—तादृशास्वातन्त्र्यमेव (२) घातः—power.

इत्यादिक्रमाङ्केषु एक-त्रि-पञ्च-इत्यादिविषमाङ्कानां त्यागः कर्तव्यः। कलानाम् सौरकलानाम् द्वि-द्वि-वर्णानुविद्धत्वात् 'कं भं' इत्यादिद्विद्विवर्णयुक्तत्वादिति भावः।

**उत्तरवर्गान्तरयोगात्स्वयमुत्तरवर्गश्चान्द्रे ॥ २ ॥**

व्या - चान्द्रे चन्द्रकलावर्गनिष्पत्तिप्रस्तावे—स्वयम् (वर्गरूपः) उत्तर-वर्गान्तरयोगात् स्वोत्तरवर्गनिर्दिष्टं वर्गान्तरं यत्तद्योगात् उत्तरवर्गः स्यादित्यर्थः।

**स्ववर्गान्तरोनं स्वयं पूर्वः ॥ ३ ॥**

व्या—स्ववर्गान्तरोनम्–स्वस्य निर्दिष्टं यद्वर्गान्तरं तेनोनं तेन वियुक्तं सत् स्वयम्। पूर्वः स्वपूर्ववर्गः स्यात्। चान्द्र इत्यनुवर्तनीयं पूर्वसूत्रात्।

**स्वोत्तरवर्गान्तराभ्यां स्वयमुत्तरः ॥ ४ ॥**

व्या—स्वोत्तरवर्गान्तराभ्याम्–स्वस्य स्वोत्तरस्य च निर्दिष्टे ये वर्गान्तरे ताभ्याम्। स्वयं युक्तश्चेत् उत्तरः स्वोत्तरवर्गः स्यादित्यर्थः। सौर इत्यधिकारात्।

**स्वपूर्ववर्गान्तराभ्यामूनश्चेत्पूर्वः ॥ ५ ॥**

व्या—स्वयमिति पदं पूर्वसूत्रादनुवर्तनीयं सौर इत्यधिकारात्। अन्यत् सुगमम्। एतेषामुदाहरणानि अग्रे द्रष्टव्यानि।

उक्तार्थस्य बीजमात्रं विधत्ते चमकब्राह्मणम्। यथा—"युग्मदयुजे जुहोति मिथुनत्वाय" "आत्रयस्त्रिंशतो जुहोति" "त्रयस्त्रिंशद्वै देवताः। देवता एवावरुन्ध आष्टाचत्वारिंशतो जुहोत्यष्टाचत्वारिंशदक्षरा जगती-जागताः पशवो जगत्यैवास्मै पशूनेवावरुन्धे", "एका च मे....तिस्रश्च म इत्याह। देवच्छन्दसं वा एका च तिस्रश्च....मनुष्यच्छन्दसं चतस्रश्चाष्टौ च। देव-च्छन्दसं चैव मनुष्यच्छन्दसं चावरुन्ध" इति। अत्रायं भावः—समविषम-सङ्ख्याप्रतिपादितयुग्मदयुजमन्त्राभ्यां कृतहोमेन मिथुनत्वलाभ इति, त्रयस्त्रिंश-त्सङ्ख्याप्रतिपाद्यमन्त्रहोमेन त्रयस्त्रिंशत्सङ्ख्याका देवा वशवर्तिनो भवन्तीति, अष्टा-चत्वारिंशत्सङ्ख्याप्रतिपादकमन्त्रहोमेन जगति पशुलाभः-पशूनां जागतत्वात् जगतीछन्दसोऽष्टाचत्वारिंशदक्षरात्मकत्वाच्च।

"एका च मे तिस्रश्च मे" इत्यादि मन्त्रपाठेन देवच्छन्दसमवाप्नोति—तथा "चतस्रश्च मेऽष्टौ च मे" इत्यादिना मनुष्यच्छन्दसमित्यर्थः। अत्र देवमनुष्यच्छन्दसोस्स्वरूपं किञ्चिदिव निरूप्यते—छन्दो नाम गर्भीकृतार्थसङ्केतितसङ्ख्यानिष्पन्नशब्दविशेषः "पङ्क्ति........विराट्" इत्यादिः। अत्र पङ्क्तिर्नाम पञ्चसङ्ख्याकानां पदार्थानां विशिष्टफलदानशक्तानां समूहविशेषसूचकश्शब्दः तथैव विराडिति दशसङ्ख्याजनितः। एवमूह्या गायत्रीप्रभृतयः। एतादृशछन्दसामेवं मनुष्यादिसम्बन्धवशात्तत्तन्नामनिर्देशः—"देवच्छन्दः मनुष्यच्छन्दः" इत्यादिः। अत्र छन्दसो देवमनुष्यादिसम्बन्धो यथा—देवपदेन आकाशो लक्ष्यते—"दिव्यमबिन्धनं विद्युदादि" इत्यादिस्थलेष्विव। अत आकाशस्थितचन्द्रमसि मूर्च्छिता रविरश्मयो वसुरूपा (चन्द्रकलारूपा) दिव्या भवन्ति। अतस्तत्प्रतिपादकाः 'एका च मे' इत्याद्या विषमसङ्ख्यानिष्पन्ना मन्त्रभागा देवच्छन्दःपदनिर्दिष्टाः। त एव (ते रविरश्मय एव) भुवि मूर्छिताश्चेत् आरोगादिमिश्रप्रभान्त(आतपान्त)रूपेणाष्टधा विभक्ता भूमेः पृश्नित्वमुपपादयन्तः 'चतस्रश्च मे' इत्यादिसमसङ्ख्यानिष्पन्ना मन्त्रभागाः मनुष्यच्छन्दःपदनिरूपिताः—भूमेर्मनुष्यावासत्वात्। (इति देवमनुष्यच्छन्दस्स्वरूपनिरूपणम्)। एवं ब्राह्मणतात्पर्यपर्यालोचनायत्तमेव पुरोदितं सर्वमतोऽनवद्यम्। अस्त्येवमेव वेदे सर्वत्र छन्दोरहस्यम्। अत एव छान्दसः।

ननु चन्द्रकलास्तावत् षोडशैव प्रसिद्धाः—तदनुविद्धा अकाराद्या स्वराश्च। अत्र तु सप्तदश दृश्यन्ते—तत्कथमुपपद्यत इति चेदुच्यते—कादिस्पर्शवर्णेषु चरमो मकारः—तस्य सौरकलाऽस्पृष्टत्वात्।

मोऽनुस्वार इति प्राप्तानुस्वारेऽदृत्वाद् द्विधर्मिता।
तथाप्योमि–म–लाभाय मोऽर्धानुस्नारवान् कृतः॥ १॥
अतस्स्वरेषु गणितः प्रजापत्याप्तये पुनः।
वर्गान्तरं त्रयस्त्रिंशच्चमकेऽस्यैव दृश्यते॥ २॥

व्या—"मोऽनुस्वारः" (८–३–२३) इति पाणिनिसूत्रेण प्राप्तानुस्वारे प्राप्तं अनुस्वाररूपं यस्य तस्मिन् अनुस्वाररूपमकार इत्यर्थः। तस्य

यद्यपि अट्त्वात् "अयोगवाहानामट्सूपसङ्ख्यानम्" (पा. सू. व्या. ८-४-२) इति भाष्यानुसारिव्याख्यावचनेन अट्प्रत्याहारघटितानां स्वराणां व्यञ्जनानां च धर्मेण युक्तत्वात् द्विधर्मिता स्वरव्यञ्जनोभयधर्मवत्ता अस्तीति शेषः। तथापि ओमि ओङ्काररूपे प्रणवे मलाभाय––मकारलाभाय।

"अकारेण जगत्पाता संहर्ता स्यादुकारतः।
मकारेण जगत्स्रष्टा प्रणवार्थ उदीरितः॥"

इति तन्त्रान्तरोक्तमकारलाभायेत्यर्थः। मः––मकारः (अनुस्वाररूपः) अर्धानुस्वारवान् कृतः 'ओँ' इत्येवंरूपवान् कृत इति भावः। एतेन 'मोऽनुस्वार' इत्यनुस्वारतामापन्नाया व्यक्तेरर्धभागरूपमकारेण व्यञ्जनत्वं शिष्टार्धरूपार्धानुस्वाररूपेण स्वरत्वञ्चावेदितं भवति। अत उक्तकारणेन अयम्––मकारः प्रजापत्याप्तये पुनः "सप्तदशो वै प्रजापतिः" "प्रजापतेराप्त्यै" (वाजपेयब्राह्मणम्), "आ श्रावयेति चतुरक्षरम्। अस्तु श्रौषडिति चतुरक्षरम्। यजेति द्व्यक्षरं येयजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशः प्रजापतिः। प्रजापतिर्यज्ञमन्वायत्तः। य एवं वेद" (तै-सं-१-६-११) इत्यादिना सप्तदशत्वस्य प्रजापत्याप्तिहेतुत्वदर्शनात्।....
........चन्द्रकलाप्रतीकानां स्वराणां सप्तदशत्वसम्पत्त्या प्रजापत्याप्तये तावत्–– स्वरेषु गणितः स्वरान्तिमत्वेन गणित इति भावः। अतोऽस्यैव वर्गान्तरं त्रयस्त्रिंशत् "त्रयस्त्रिँशच्च मे" इति चमके––चमकपाठे दृश्यते। अस्य मकारस्यातिशयोऽस्मदीय-**मातृकाप्रासादे** द्रष्टव्यः।

अथ पुरोक्तसूत्रपञ्चकार्थसौलभ्याय प्रदर्श्यते प्रक्रिया––चान्द्रस्य :––

वर्गाङ्काः–०-१-४-९-१६-२५
मूलाङ्काः–०-१-२-३- ४- ५
वर्गान्तराणि–०-१-३-५- ७- ९

---

(१) ओँ––आन्ध्रभाषायां पुनरर्धभागत्वेन प्रकल्प्य अवशिष्टार्धभागनिरूपणायार्धचन्द्राकृतिरेखं ౦ రూపా निरूप्यते।

अत्र पूर्वोत्तरवर्गसाधनं यथा—गृह्यताम् ३ अङ्कः–तस्य वर्गः–९-वर्गान्तरम्–५; तदुत्तराङ्कः ४, तस्य वर्गान्तरम्—७ एतेन (उत्तरवर्गान्तरेण) ३–वर्गः–९ युक्तश्चेत्, उत्तराङ्कस्य-४-एतस्य वर्गः–१६ स्यात्। (सूत्रम्–२)

तथा तत्पूर्वाङ्कः–२ एतद्वर्गसाधनाय स्वयम् ९ स्ववर्गान्तरेण–५ ऊनं सत् (वियुक्तश्चेत्)—४ भवति। एतत्पूर्ववर्गः स्यात्स्वस्य ९ वर्गस्य इत्यन्वयः। एवमेव शून्यावधि कर्तव्यम्। अथैतस्य–४ रूपस्य पूर्ववर्गः–पूर्वोक्तविधिना (स्वस्मिन् स्वगान्तरोनीकरणरूपेण) ४-३=१ एवं साध्यः, तथा चतूरूपवर्गस्य पूर्ववर्गः–१ भवति। तस्यापि पूर्ववर्गः शून्यम् (०) तत्साधनमुक्तविधिना १-१=० एवम् शून्यान्तं पूर्ववर्गसाधनम्। (सूत्रम् ३)

एतेन सर्वसङ्ख्यानां शून्ये पूर्णे लय इत्यवगम्यते। ततस्तस्मात्पूर्णात् (शून्यात्) उत्तरवर्गसाधनविधिना (द्वितीयसूत्रविधिना ०+१=१, १+३=४, ४+५=९ इत्यादिना) उत्तरवर्गाः साध्या अनन्तावधि। एतेन सर्वसङ्ख्यासृष्टिरपि शून्यादेव (पूर्णादेव) भवतीत्यवगम्यते। एतद्दृष्टान्तेन सङ्ख्याप्रतीकजगतः सृष्टिलयावपि पूर्णप्रतीकाद्ब्रह्मण एव भवत इति वेदितुं सुशकम्। एवमेव सौरविषयेऽपि यथा —

वर्गाङ्काः—०–४–१६–३६–६४

मूलाङ्काः—०–२– ४– ६– ८

वर्गान्तराणिः—०–४– ८–१२–१६

उत्तरवर्गसाधनम् :— चतुरिति (४) मूलाङ्को ग्राह्यः तद्वर्गः–१६-तस्य-स्वोत्तरवर्गान्तराभ्यां योगः कार्यः १६+८+१२=३६ स्वोत्तरवर्गः स्यात्, एवमनन्तावधि कार्यः। (सूत्रम्-४)

अथ पूर्ववर्गसाधनं यथा—स्वस्मिन् स्वस्वपूर्ववर्गान्तराभ्यां वियोगः कार्यः–(१६–[८+४]=४) इति। तस्यापि (४ इत्यस्यापि) (४–[४+०]=०) इत्येवंरूपं भवति। (सूत्रम्-५)

ततः पुनरुत्तरवर्गसाधनविधिना (०+१+४=४ ; ४+४+८=१६ ; १६+८+१२=३६ इत्यादिना) अनन्तावधि भवति। एतेन चान्द्रविषय इव जगत्सृष्टिलयहेतुर्ब्रह्मैवेत्यवगम्यते इति वर्गनिष्पत्तिप्रक्रिया।

एवमेतेन पूर्णात् (बिन्दोः) सङ्ख्यायाः सृष्ट्यादित्रयं विदित्वा एवमेवैतत्प्रपञ्चस्यापि पूर्णात् ब्रह्मणः सृष्ट्यादीति दृष्टान्तबलेन ब्रह्मतत्त्वं विदित्वा जीवः कृतार्थोऽवश्यं भवेदित्याशास्महे।

अथ वर्गीयसंक्षिप्तश्लोकाः। तत्र सौरे :—

वर्गान्तरं द्विमूलं स्यात्तत्क्रमान्तेन ताडितम्।
मूलार्धेनाथवा वर्गः मूलाऽऽहतं तथा ॥ ३ ॥
मूलार्धेन द्विधा क्षुण्णश्चतुरङ्कोऽपि वर्गगः।
एवं सौरकलावर्गवैचित्र्यं स्वैन्दवे पृथक् ॥ ४ ॥
वर्गान्तरस्य वर्गस्तु मूलवर्गाच्चतुर्गुणः।
एतद्धि वर्गवैचित्र्यं सृष्टिवैचित्र्यसूचकम् ॥ ५ ॥

अथ चान्द्रे—

पूर्वमूलयुतं मूलं वर्गान्तरमभूदिदम्।
पूर्ववर्गयुतं वर्गः चान्द्रेऽयं विधिरन्यथा ॥ ६ ॥
स्वाभ्यस्तमूलं वर्गो वाप्यादेर्वर्गान्तराऽऽचयः।
स्वोत्तरान्तरयुग्वर्गस्तूत्तरो वर्ग ऐन्दवः ॥ ७ ॥
सत्त्वादि त्रिगुणान्योन्यसङ्करात्सृष्टिसम्भवः।
तत्सूचकमिदं वर्गगणितं छन्दसेरितम् ॥ ८ ॥

एतच्चमकोक्तमन्त्रार्थविज्ञानं सर्वमपि 'मम यज्ञार्थमुपकल्पताम्' इति पाठकाशासनमेव ; "यज्ञेन कल्पताम्" इति बहुधा अत्र (चमकपाठे) श्रवणात्।

अथ सङ्ख्याप्राशस्त्यम्—

जगतः प्रकृतिः कर्त्रीत्येतन्मतनिराकृतौ।
महान् श्रमोऽभूद्व्यासर्षेः न तथैतन्निदर्शने ॥ ९ ॥

शब्दानामिव सङ्ख्यानां नानासंशयदातृता ।
नास्त्यतोऽत्र श्रमो नास्ति शीघ्रता तत्त्वबोधने ॥ १० ॥
अतोऽयं सुखदो मार्गस्सङ्ख्यादृष्टान्तदर्शितः ।
तेन तत्रार्थविज्ञाता संशयात्मा न जातुचित् ॥ ११ ॥

अथोपक्रमानुरुद्धोपसंहारं दर्शयन् तद्विषयभूतकालस्वरूपं तत्फलं च निरूपयति—

क्रिययोरन्तरं कालो द्रव्ययोस्तु तथा दिशः ।
दिग्भेद एव देशस्स्यात्त्रिप्रश्नं त्रितयं त्विदम् ॥ १२ ॥

अथ कालदिग्भेदयोरादौ दिग्भेदात्फलभेदोदाहरणम् —

समरेखाग्रयोस्स्यातां कगयोर्गकयोरपि ।
समेऽन्तरे किन्तु भिन्ने फले वीर्यप्रजे इव ॥ १३ ॥
वीर्यं प्राचीनमेव स्यात्प्रतीची स्यात्प्रजा पुनः ।
महान्स्वरूपभेदोऽत्र श्रुत्या चानुभवेन च ॥ १४ ॥

---

(१) **संशयात्मा**—'संशयात्मा विनश्यति' (भ-गी-४-४०) इति तल्लक्षणलक्षितसंशयात्मेत्यर्थः ।

(२) **त्रिप्रश्नम्**—ज्योतिश्शास्त्रीयपारिभाषिकमिदं पदम् । त्रयाणां दिग्देशकालोद्दिष्टानां प्रश्नानां समाहारप्रतिपादकमिति भावः । अत्रत्यदेशकालयोर्मायाकल्पितत्वमाहुर्भाष्यकाराः "मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम्" (**दक्षिणामूर्तिस्तवः**) इति । एतत्त्रितयमध्ये दिग्देशयोस्तुल्यधर्मयोरैक्यभावनयैकत्वं सम्पाद्य-त्रित्वपूरणाय पुनः कृतः पात्रस्वीकारः । तदाभवद्देशकालपात्राणीति लौकिकव्यवहारः । तत्र पात्रदेशकाला इति क्रमेण पितृपितामहप्रपितामहेतरद्भावरूपदोषनिर्वाणहेतुतया गृहीता इति श्रूयन्ते "यास्तिष्ठन्ति या धावन्ति या आर्द्रघ्नीः परितस्थुषीः । अद्भिर्विश्वस्य भर्त्रीभिरन्तरन्यं पितुर्दधे ; अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । आभिर्दिग्भिरनन्ताभिरन्तरन्यं पितामहाद्धे ; अन्तर्दध ऋतुभिरहोरात्रैस्ससन्धिभिः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्धे" (मन्त्रप्रश्नम्) इति । एतेन पात्रदेशकालानां परस्परसम्बन्धस्त्ववगम्यते पितृपितामहप्रपितामहानामिव । अत्र प्रथममन्त्रोक्तपात्रस्थानीयानामपां तावत् "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छा-उ-पञ्चाग्निविद्या) इति जीवतादात्म्यताऽऽपत्त्या पात्रतोपपद्यते—जीवस्य पुनःकर्मकर्तृत्वेनेति ज्ञेयम् ।

(३) **श्रुत्या**—"तस्मात्प्राचीनँ रेतो धीयते । प्रतीचीः प्रजा जायन्ते ।" (तै-सं-५-२-१०) इति ।

अथवा भागभक्तश्चेदन्तरं गणनाविधौ ।
आद्योऽन्तिमोऽन्तिमश्चाद्यः स महद्भेदहेतुकः ॥ १५ ॥

अपि च—

यौ कोकिलार्थदौ वर्णौ दिग्भेदात् मर्कटार्थदौ ।
अनुलोमविलोमाख्यसंज्ञे दिग्भेदलक्षणे ॥ १६ ॥

किञ्च—

तथैवात्र मधुन्याज्यमुप्तं स्याद्विषमद्भुतम् ।
आज्ये चेन्मधु पीयूषमेवं दिग्भेदजं फलम् ॥ १७ ॥

अथ कालभेदात्फलभेदं विवक्षुरादौ क्रियाभेदं दर्शयति—

क्रिया स्याज्जडजन्येति जीवजन्येति च द्विधा ।
अप्राकृतत्वाज्जैव्यास्तु श्रेष्ठता परिकल्पिता ॥ १८ ॥

अथ जैवक्रियाश्रैष्ठ्योदाहरणम्—

यमयोर्जननस्याथ प्राकृतत्वादमुख्यता ।
जीवकर्तृकवापाख्य क्रिययोरेव मुख्यता ॥ १९ ॥
तत्तयोरन्त्यजो ज्येष्ठः कनिष्ठोऽभूत्तदादिमः ।
यथा लक्ष्मणशत्रुघ्नौ स्यातां दशरथात्मजौ ॥ २० ॥

अपि च—

वप्तुर्वापक्रियायां तत्करस्थात्क्षेत्रगं गुरु ।
बीजं तच्छ्रेष्ठता वापक्रिययोर्मध्यगक्षणात् ॥ २१ ॥

अथ काललक्षणं निगमयति—

एवं प्राकृतजैवाख्यक्रियाहेतूद्भवोऽप्यसौ ।
क्रियामात्रान्तरत्वं तत्कालस्योक्तं हि लक्षणम् ॥ २२ ॥

---

(१) असौ—कालः ।

अथ निर्गुणसगुणभेदेन कालद्वैविध्यं दर्शयति—

क्रियाया अन्तिमादूर्ध्वं क्षणादन्यादिमावधि ।
यदन्तरं निर्गुणस्तत्कालोऽन्यस्तद्विपर्ययात् ॥ २३ ॥

अथोक्तार्थं विवृणोति —

कार्यव्यासोऽयमाकाशतुलितो गोचरोऽपरः ।
अगोचरो महाकालः श्रुतावात्मेति गीयते ॥ २४ ॥

ब्रह्मविद्यास्वरूपिण्याः श्रीदेव्याः पूजनेऽग्रतः ।
यत्कालमिथुनं पूज्यं तेनात्रापि तदीरितम् ॥ २५ ॥

उक्तार्थं विवृणोति—

बुद्धिसागरमध्यस्थमहाकामाख्यमेरुगे ।
ध्यानरूपे मणिद्वीपे भाति श्रीपुरमद्भुतम् ॥ २६ ॥

तत्र निश्चलचिन्ताख्यमणिकल्पसगृहे स्थिता ।
श्रीदेवी ब्रह्मविद्या तत्पुरादिः काल एव सः ॥ २७ ॥

सर्वसाधारणेष्वन्त्यो दुरूह्यानां तथाऽऽदिमः ।
तदारभ्यैव चिन्तानां मणीनां कल्पना कृता ॥ २८ ॥

स कालस्सन्धिगो ज्ञाताज्ञातवस्तुद्वयान्तरे ।
वाग्वात्मनोर्यथाकाशो मध्यगस्तद्वदेव हि ॥ २९ ॥

---

(१) अन्यादिमावधि—अन्यकार्यादिमक्षणावधीत्यर्थः ।

(२) अन्यः—इतरः । सगुण इत्यर्थः ।

(३) श्रुतौ —"हरः कालकालो गुणी सर्ववेद्यः" इति कालमाधवीये श्वेताश्वतरोपनिषदीत्यर्थः । "स विश्वकृद्विश्वविदात्मयोनिः ज्ञः कालकारो गुणी सर्वविद्यः ।" इति (श्वे-उ-६-१६)पाठः । तथा च विद्यारण्यकृतश्वेताश्वतरोपनिषद्वित्रतिरूपानुभूतिप्रकाशे "ज्ञान्येव विश्वकृत्कालः कालः सत्यादिभासकः । प्रधानजीवयोः स्वामी हेतुः संसारमोक्षयोः ॥" इति नन्वयमर्थः "मायाकल्पितदेशकालकलना" इति शाङ्करोक्त्या विरुध्यत इति चेन्नायं दोषः—तस्य (शङ्करोक्तकालस्य) सगुणत्वात्तथोक्तम् ।

सन्धिस्थोपासनं ज्ञानसाधनं तत्तथोदितम् ।
अतोऽयं ब्रह्मविद्यैव श्रीविद्यावदिति स्मर ॥ ३० ॥

**अथ पाठकाशीर्वादः**

नामेति रूपं जगतोंऽश युग्मं तत्रादिमं ब्रह्ममुखालयं सत् ।
सरस्वतीति प्रथितं द्वितीयं रूपं पुनर्विष्णुसती रमेति ॥ ३१ ॥
ताभ्यां रमाब्रह्मसतीमणिभ्यां सचामराभ्यामपि सेव्यमाना ।
परात्मनः कामकला स्मृता सा मायेति तद्वक्षतु कर्मलोपात् ॥ ३२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यन्वर्थसकलबिरुदावलीविराजमान-
श्रीविद्याशङ्करपदमानेशप्रकाशितशृङ्गेरीश्रीविरूपाक्ष-
श्रीपीठाधीश्वरजगद्गुरुश्रीसदाशिवानन्दभारतीशिष्य-
**श्रीपरिपूर्णप्रकाशानन्दभारतीमहायतिकृतिषु**
विमर्शामृते ब्रह्मतत्त्वावबोधविशिष्टसङ्ख्या-
विशेष्यताविमर्शो नाम
षोडशबिन्दुः

---

(१) **ज्ञानसाधनम्**—ज्ञानहेतुकम् । तथा चोक्तम् "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः । इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च" (बृ-उ-५-३-९) इति ।

(२) **नामेति रूपम्**—नाम रूपमिति पदक्रमः ।

(३) **अंशयुग्मम्**—अस्ति भातीत्याद्यंशपञ्चके चरमांशयुग्मम् । तथा चोक्तम् "अस्ति भाति प्रियं नाम रूपमित्यंशपञ्चकम् । तत्राद्यत्रितयं ब्रह्म चरमद्वितयं जगत्" इति स्मृत्यन्तरे । (४) **ब्रह्ममुखालयम्**–ब्रह्मणो वेदस्य मुखानि ऋग्यजुःसामाथर्वरूपाणि तान्येव आलयं निवासस्थानं यस्य तत् । (५) **रूपम्**—द्रव्याकृतिः जातिव्यक्त्यात्मिका ।

(६) **अपि**—अत्र (सचामराभ्यां रमाब्रह्मसतीमणिभ्यामपीत्यत्र) अपिशब्दः "महाचतुष्षष्टिकोटियोगिनीगणसेविता," "गेयचक्ररथारूढमन्त्रिणीपरिसेविता" इत्यादि-ललितासहस्रनामोक्तानन्तशक्तीः समुच्चिनोति ।

(७) **कामकला**—परात्मनः जगत्सिसृक्षारूपा । सा तावत् 'तदैक्षत' इत्यादि-श्रुतिसिद्धा । मन्त्रागमे पुनः "अग्रबिन्दुपरिकल्पिताननां मध्यबिन्दुयुगलस्तनद्वयीम् । बिन्दुनादकलिकापरामृतां नौमि कामकलिकात्मसुन्दरीम् ॥" इत्येवं ध्यानगोचरेयं महा-कामेश्वरपत्नीति व्यवह्रियते—वेदान्ते तावन्मायेति च ।

(८) **स्मृता**—स्मृतिपथमानीता । स्मृतिर्नाम संस्कारमात्रजन्यं ज्ञानम् ।

संस्कारो नाम मयेदमनुभूतमिति पूर्वानुभवजन्यगुणविशेषः। एतज्जन्यज्ञानेन जन्यते दृष्टवस्तुस्वरूपावबोधः।

(९) **सा**—पुरोक्ता कामकलारूपा मायाऽपरनाम्नी।

(१०) **तद्रक्षतु कर्मलोपात्**—तत् तस्मात्कारणात्। यतः अत्र वाक्ये वक्तव्यकर्मानुक्तिरूपकर्मलोपः कामकलायाः जगन्मातुः सन्ततानुस्मरणासक्तमनस्कत्वेनोत्पन्नः—तत्कारणादित्यर्थः। तादृशकर्मलोपात् समुचितैव रक्षणप्रार्थना। तथा च स्मर्यते "भूमौस्खलितपादानां भूमिरेवावलम्बनम्। त्वयि जातापराधानां त्वमेव शरणं शिवे॥" इति।

यद्वा; यत इयं जगत्सृष्टिनिमित्तभूता कामकला मायेति—मिथ्येति स्मृता तस्मात्कारणादवश्यकर्तव्योपदिष्टानां श्रौतस्मार्तकर्मणामकरणरूपकर्मलोपः तस्माद् रक्षत्वित्यन्वयः। नन्वत्र कर्मणामवश्यकर्तव्यतोपदेशस्तु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणं वा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" "अहरहः सन्ध्यामुपासीत" इत्यादिहेतुनिरूपणानिरूपणपूर्वककर्मकर्तव्यतोपदेष्ट्रीभिः श्रुतिभिः कृतः "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः॥" (मनुस्मृतिः) इत्यादिस्मृतिभिश्च। एतादृशकर्मलोपः प्रत्यवायहेतुकः "नित्यकर्माननुष्ठानान्निषिद्धकरणादपि। यत्पापं जायते पुंसां तदघौघनिवृत्तये॥" **(रेणुकातन्त्रम्)** इत्यादिप्रायश्चित्तस्मरणात् तादृश प्रत्यवायदृढत्वेनावश्यभोग्यत्वात् तस्माद्रक्षणयाच्ञानुचितेति चेदुच्यते—'अत्र कामकला मायेति मिथ्येति स्मृता' इत्यनेन तत्स्वरूपावबोधो वर्णितः। स तावच्चित्तशुद्धिसापेक्षः, सा (चित्तशुद्धिः) पुनः कर्मसापेक्षिणी—तस्मादिहजन्मन्यकृतमपि कृतं जन्मान्तरे तादृशं दृढमूलकर्मेत्यवश्यं वक्तव्यम्—तस्मात्तज्जीवस्य न कर्मलोपः। किन्तु 'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि' इत्युक्तदिशा कर्तव्यत्वेनोपदिष्टस्य कर्मणः अदृढमूलत्वात् तदकरणे प्रत्यवायस्य स्वल्पत्वात् तादृशापराधाद्रक्षणयाचना समुचितेति सुज्ञेयम्।

अपि च; उक्तविधिना मायास्मृतेरविद्यानिवर्तकत्वेन तन्निमित्तकजीवत्वस्यापि निवृत्तत्वात् जीवेश्वराभेदप्रतिपत्तौ सिद्धायाम्—रक्ष्य-रक्षण-रक्षितृरूपत्रिपुट्यभावप्रसङ्गात्–यो जातः कर्मलोपः तन्न दोषाय कल्पते प्रत्युतालङ्काराय। तथा सति कर्मलोपे रक्षत्विति प्रार्थनापि लुप्तप्राया कर्त्रा सह-तथाविधाद्वैतसिद्धेः। तदुपस्कारकरूपो भूयादेतद् ग्रन्थपाठ इति मङ्गलाशासनम्।

किञ्च; स्मृता सेति कर्तृपदोच्चारणोत्तरकालवक्तव्यक्रियाकर्मणोः प्रथमायाः क्रियाया रक्षत्वित्यर्थोक्ते अद्वैतभाववशात् "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" (भ-गी-४-३७) इत्युक्तदिशा जनितत्रिपुटीलयहेतुकः कर्मलोपः। तस्मात्तदित्यव्ययं ब्रह्मैवावशिष्यते—तद्रक्षत्वित्यन्वयः। अत्र रक्षत्वित्यर्थोक्त एव झटित्यद्वैतभानविषये मा भूद्विस्मयः—बहुजन्मार्जितपुण्यविशेषपरिपक्वचित्तानां तथा दर्शनात्। दृश्यतां तावज्जनकाष्टावक्रीयकथा इति। एवमेव सर्वे विषया विमर्शनीया इति दिग्दर्शकोऽयं ग्रन्थः॥

# शुद्धपत्रम्

## मुद्रा या च स्खलद्गतिः

* ताराङ्कनं त्वत्र दोषे तत्पौनःपुन्यसूचकम् ॥

| पुटे | पङ्क्तिः | असाधुः | साधुः |
|---|---|---|---|
| २ | ९ | तर्पितास्तै | तर्पिता तै |
| ३ | २३ | *चित्ती | चित्तिप्रश्नः |
| ४ | २४ | रथावृत्त | रथावृत्तं |
| ७ | २२ | तादृशदिने | तादृशभूदिने |
| | २४ | स्माम्बिदा | स्माम्बिदा |
| | २७ | अहोभूपृष्ठ | अहो स्वस्वभूपृष्ठ |
| ८ | १५ | अत एव | एवमेव |
| ९ | १८ | वाच्या | वाच्यानि |
| | २७ | तिथिविशेषः | नियतितत्त्वविशेषः |
| १० | २० | वृषस्यन्तौ | वृषस्यन्त्यौ |
| ११ | १७ | पितृप्रयोगि | पितृप्रयोगि |
| | २१ | पितृणाम् | पितृणाम् |
| १२ | ५ | त्राजक | त्राजका |
| | २३ | (२९) | (१९) |
| १३ | १५ | *Elipse | Ellipse |
| १४ | ३ | चन्द्रमा | २चन्द्रमा |
| | २२ | पङ्क्तिः प्राय- | पङ्क्तिप्राय- |
| १६ | ८ | *तज्ज्ञान | तद् ज्ञान |
| १७ | १ | तच्छित्सू- | तच्चित्सू- |
| | १६ | *रूपाण्या | रूपाणि वसून्यावे |
| | २३ | एकयेवा....ब्रह्म | एकमेवा....ब्रह्म |
| १८ | १५ | साद उपासीद तस्यै | सादमुपासीददस्यै |
| | १६ | प्रजा | प्रजां |
| | १८ | जनतोः | जनितोः |
| | २२ | -स्तोतः | -स्रोतः |
| | २४ | त्रिरात्र | त्रिरात्रं |
| १९ | ९ | -हतूनां | हतूनां |
| | १० | किन्तूभे | किन्तूभौ |
| २१ | १९ | इतरस्मिन् | इतरस्मिन् |
| | २२ | अवस्तुस्त्वात् | अवस्तुत्वात् |
| २२ | १९ | बाधः | बापि |
| २३ | २३ | स्वस्थं | खस्थं |
| २४ | १९ | द्व्यङ्गुलं | द्व्यङ्गुलं |
| | २२ | १वज्राङ्गार | २५ पुटे द्रष्टव्या |
| २५ | १२ | दोधूय | दोधूय |
| २६ | १ | प्रलय | प्रलयं |
| २७ | ३ | पद सूर्यपरम् | पदं सूर्यपरं "असावादित्यो ब्रह्म" इति श्रुतेः। युक्तिसहं चैतत्— |
| | १२ | प्रद्युम्नं | प्रद्युम्नं परितः |
| | १८ | प्रभुत्व | वृद्धत्व |
| २८ | ३ | तद्घनम् | तद्घनम् |
| | ६ | भूगोलफलं | भूगोलघनफलं |
| | २० | प्रामण्या | प्रामाण्या |
| ३० | १६ | वीप्सयो | वीप्सयो |
| ३१ | १ | एतस्यै | एकस्यै |
| ३२ | १८ | त्र्यो | वृत्तयो |
| | २५ | pora | para |
| ३४ | ३ | असदन्...पुरः | (ऋग्वेदपाठः) |
| | | | असनन्...पुनः (यजुर्वेदपाठः) |

| पु | प | अ | सा |
|---|---|---|---|
| ३५ | २२ | षाण्भासिकी | षाण्मासिकी |
| ३८ | १८ | यन्मनना | यन्मनाङ् |
| | २६ | -स्वप्नं | -स्वप्नः |
| ४२ | २६ | व्राह्मणा | ब्राह्मणा |
| ४३ | ५ | * त्रियि | त्रियां |
| | २७ | नान्यदा | नान्यथा |
| ४४ | १ | शरण्यं | शरण्यः |
| | १५ | जीवत्वे चारुता हेतु | जीवत्वेऽचारुता- हेतो |
| ४५ | ११ | निन्दाः | निन्दा |
| | १५ | (....गमन.... स्वतः) | (...गमनं ... स्यतः) |
| | २१ | कृताः | कृता |
| ४६ | २ | भावमयप्रपञ्चः | भावमयः प्रपञ्चः |
| | ५ | स्वनिष्ठता | ष्वनिष्ठता |
| | २० | माप | मपि |
| ४९ | ६ | -नाम | -नामक |
| | २४ | श्रेष्ठतया | श्रेष्ठता |
| ५० | १० | च्छङ्गार | -च्छृङ्गार |
| ५१ | १० | तात्पर्यम् । समन्वया | तात्पर्यम् (एतौ श्लोकौ भिक्षुसूत्रोक्त- द्विचतुर्थकाधिकरणे ब्रवाते इत्यन्वयः)। — समन्वया |
| | २९ | इशक्ति- शिवशक्ति | इश्क्ती-शिवशक्ती |
| ५२ | १० | –बूंयात् | –ब्रूयात् |
| ५३ | २० | कलितेति | कथितेति |
| | २४ | कथ्यत इति | कथ्यत इन्दु- कलेनेति |

| पु | प | अ | सा |
|---|---|---|---|
| ५४ | ३ | सत्त्वं | स्वत्वं |
| | १० | काम कलावज्र- | कामकला वज्र- |
| ५५ | १६ | तै-उ- | छां-उ-६-२-३ |
| | १९ | प्रलव | प्रलय |
| ५६ | २ | रिवाव | रव |
| ५८ | २४ | न्वर्थः | न्वर्थम् । |
| ५९ | १८ | त्वत्रोच्यते | त्वत्र क्रियते |
| ६१ | २१ | वेपूथू | वेपथु |
| | २४ | शङ्काख्या | शङ्काख्यास्तथा |
| ६२ | ११ | कार्यणि | कार्याणि |
| ६३ | ११ | वदि | वादि |
| ६४ | ११ | विशेष | विशेषः |
| ६५ | ६ | मत्वं | मस्त्वं |
| | १२ | स्त्वेकत्वं | स्वेकत्वं |
| | २२ | प्रकुति | प्रकृति |
| ६७ | २ | ब्रह्मैव | ब्रह्मैव |
| | २१ | क्रियाम् | क्रियायाम् |
| ७२ | २४ | –पदं | –पथं |
| | २७ | श्रीचका- | श्रीचक्रा- |
| | ,, | सग्य- | सम्य- |
| ७२ | १२ | -वर्णा | -वर्गा |
| ७२क | 7/11 | हसखफ्रें | ह्स्खफ्रें |
| | 7/12 | हास्य | हास |
| | 8/5 | गुरु | गुण |
| | 8/11 | हसऔः | ह्सौः |
| | 8/13 | अद्ध- | अद्भु- |
| | 10/11 | हसक्लीं | ह्स्क्लीं |
| ७३ | ४ | दायुर्रा | दायुरा |
| | १२ | पाश्चल्य | पाश्चात्य |
| ७४ | ९ | 76 | 79 |

| पु | प | अ | सा |
|---|---|---|---|
| ७९ | १० | कार्ग्रं | गार्ग् |
| | १२ | दात्स्य | दात्म्य |
| | २१ | श्लोष्मा | श्लेष्मा |
| ८० | २ | पुरीषं | तत् पुरीषं |
| ८१ | ४ | विना । | विना-इति खलु भवदाशयः । |
| ८३ | १४ | यत्पूर्णि | पूर्णि |
| ८८ | २३ | मान्द | मानन्द |
| ९१ | ८ | कूटस्य | कूटस्थ |
| ९२ | ३ | पुरुषानुप | पुरुषा उप |
| | ५ | वार्यं | वार्थं |
| | २४ | रेतांसि | रेताँसि |
| ९३ | ५ | संह्विताः | सम्मिताः |
| | २० | वार्दः | पादः |
| ९४ | १८ | तस्यादृष्ट | तस्या अदृष्ट |
| | २० | बाध्यमान | सा बाध्यमाना |
| १०० | १९ | ऽदद् | ऽददद् |
| | २० | ऽदद | ऽददद |
| १०५ | १५ | एव | एवार्यं |
| १११ | २५ | तत्साधन | तत्स्थान |
| ११२ | २५ | स्वक | स्वक |
| ११६ | ५ | -दान | -धान |
| ११९ | २६ | -नमिह रयि- | -मिहरयिँ |
| १२३ | ६ | ष्विह | ष्विव |
| १२४ | २ | तथा | तदा |
| | ७ | भ्रष्टा | भ्रष्ट |
| | १४ | नाम्लीमि | नाम्लीलमि |
| | २८ | लक्षणा | लक्षण |
| १२५ | ७ | तदीयो | तदीये |
| | १० | चुम्ब | बिम्ब |
| | १६ | तथव | तथैव |
| | २४ | भवये | भवेय |
| १२६ | २७ | अतश्चा | अज्ञश्चा |
| १२८ | १३ | दृष्ट्वा | दृष्ट्या |
| १३० | १ | द्रक्ष्माण | द्रक्ष्यमाण |
| १३१ | ५ | चरितं | चरितस्य |
| | ११ | तत्ता | स ता |
| १३३ | २१ | विराजे | विराजै |
| १३५ | १२ | जगद्रूपकार्य | जगद्रचनारूपक्रिया |
| १३७ | २२ | नुस्नार | नुस्वार |
| १४० | ८ | स्वर्गा | स्ववर्गा |
| १४१ | ९ | मूलाऽऽहतं | मूलं मूलाऽऽहतं |
| | २४ | कर्त्री | कर्त्री |
| १४२ | ९ | योस्यातां | योस्स्यातां |

